# जाहेर खबर.

| संस्कृत ग्रंथ, | गूजराती टीका साथे, | कीमत. |
|---|---|---|
| श्रीमद्भागवत दसमसकंद टीका गूजराती | | ५–०–० |
| श्रीभगवद्गीता. | ,, | १–०–० |
| सीवमहीम्न. | ,, | ०–२–० |
| सप्तशती तथा चंडीपाठ. | ,, | १–८–० |
| विष्णुसहस्रनोपाठ. .... .... | ,, | ०–६–० |
| नारणकवच. .... .... | ,, | ०–१–० |
| रामरक्षा. .... .... .. | ,, | ०–१ ० |
| गंगालेहेरी. .... .... | ,, | ० ४ ० |
| चमत्कार चिंतामणी. .... | ,, | ० ४ ० |
| वधमाणाख्य राजनीती .. .. | ,, | ० २ ० |
| धरमप्रकाश. .. .. | ,, | ० ४ ० |
| सीधीतहरस. .... ... | ,, | ० ३ ० |
| कृष्णाष्टक. .... ... | ,, | ० ३ ० |
| भागवतसार. .... .... | ,, | १ ० ० |
| सतनारायण. .. .... | ,, | ० ६ ० |
| मणीरत्नमाळा. .... .. | ,, | ० ६ ० |
| भर्तृहरीकृत त्रण भाग.(टी. संस्कृत गूजराती) | | १–४–० |
| भर्तृहरीकृत वैराग्यसतक. | ,, | ० ६ ० |
| भर्तृहरीकृत नीतीसतक. .. | ,, | ० ६ ० |
| भर्तृहरीकृत शृंगारसतक. .... | ,, | ० ६ ० |
| पंचरतनगीता(छपायछे.) .... | ,, | |
| जोतीपसार. .... ,, .... | ,, | |
| वैष्णवना बावीस ग्रंथ..... ,, | ,, | |
| शीवपुराण. .... ,, | ,, | |
| एकादशी माहात्म. ,, | ,, | |
| पुरसोत्तम माहात्म. ,, | ,, | |
| गरुडपुराण. .... ,, .... | ,, | |
| यजुरवेद त्रीकालसंध्या ,, .... | ,, | |

अथ 

# श्रीदुरगासप्तसती

## गूजराती भाषांत्तर.

साथे

छपावी प्रसिद्ध करनार.

**बुकसेलर, हरगोवनदास कालीदास.**

तथा

**बुकसेलर, माहादेव रामचंद्र.**

---

**अमदावाद:**

साहापुरमां वनमाळी वांकानी पोळमां
हरगोवनदास हरजीवनदास पटेल
शेठोए पोताना ग्रंथोदय प्रेसमां
छापी प्रसिद्ध करी.

---

संवत १९४२ — सन १८८६.

# अनुक्रमणिका.

# जाहेर खबर.

---

સઘળા સદગ્રહસ્થોને ખબર આપવામાં આવેછે કે, સંસ્કૃત, ગુજરાતી, તથા અંગ્રેજી તરજુમાઓ, ડીકસનેરીઓ, વારતાઓ, વૈષ્ણવધર્મનાં, જૈનધર્મનાં, વૈદકનાં, નાટકનાં, તથા પેહેલીથી તે ગુજરાતી સાતમી ચોપડી સુધીના અર્થ વિગેરે બીજાં ઘણી જાતનાં પુસ્તકો અમારી દુકાનેથી વેચાથી મળશે, અને સામટાં ખરીદ કરનારને રોકડી કીંમતે કીફાયતથી મળશે.

પુસ્તકો છપાવવાં હોય તથા વેપારીઓને ખરીદ કરવાં હોય તેઓએ નીચેલખેલા સરનામાંથી કાગળ લખી ખુલાસો કરવો, નાટપેડ કાગળ લીધામાં આવશે નહીં.

## છાપવા સંબંધી.

પુસ્તકો—રંગબેરંગી, સોનેરી પાઉડરથી ટાઈટલપેચ, (ડીબાચા) હેડબીલો, કંકોતરીઓ, અંગ્રેજી, ગુજરાતી વિગેરે, ટાઇપથી, તથા શિળાછાપથી છાપવાં હશે તેઓને સારી છાપથી સસતી કીમતેથી છાપી આપવામાં આવશે, માટે નીચે લખેલા સરનામાથી કાગળ લખી ખુલાસો કરવો નાટપેડ કાગળ લેવામાં આવશે નહીં ને જવાબ મંગાવવો હોય તેઓએ અડધા આનાવાળી પોસ્ટની ટીકીટ મોકલાવવી.

બુકસેલર, જગજીવનદાસ દલપતરામ.—ઠે. બાલેટણની હવેલી નીચે.
મુ. અમદાવાદ.

બુકસેલર, હરગોવનદાસ હરજીવંનદાસ—ઠે. બાલેટણની હવેલી નીચે.
મુ. અમદાવાદ.

બુકસેલર, હરગોવન કાળીદાસ.—ઠે. બાલેટણની હવેલી નીચે.
મુ. અમદાવાદ.

બુકસેલર, મહાદેવ રામચંદ્ર.—ઠે. બાલેટણની હવેલી નીચે.
મુ. અમદાવાદ.

પટેલ, હરગોવનદાસ હરજીવનદાસ પારેખ, ગ્રંથોદય પ્રેસનો માલેક,
ઠે. અમદાવાદ—જીલ્લે શાહાપુર વનમાલીવાંકાની પોળમાં.

ઊપરના સરનામાથી કાગળ મોકલાવશે તે અમોને પોહોચશે.

# ॥ अथप्रयोगविधिप्रारंभः ॥

---

॥ श्रीगणेशायनमः ॥ ॥ अथकात्यायनीतंत्रोक्ताःप्रयोगालिख्यंते ॥ प्रतिश्लोकमाद्यंतयोःप्रणवंजपेन्मंत्रसिद्धिः ॥ १ ॥ ॥ अग्रेसर्वत्रश्लोकपदंमंत्रोपलक्षणं ॥ सप्रणवमनुलोमव्याहृतित्रयमादौ अंतेतुविलोमन्तदित्येवंप्रतिश्लोकंकृत्वाशतावृत्तपाठेऽतिशीघ्रंसिद्धिः ॥ २ ॥ प्रतिश्लोकमादौजातवेदसइत्यृचंपठेत्सर्वकामासिद्धिः ॥ ३ ॥ अपमृत्युवारणायत्र्यंबकमंत्रंपठेत् ॥ आदावंतेचशतमित्यर्थः ॥ प्रतिश्लोकंतन्मंत्रजपइत्यन्यत्र ॥ ॥४॥ प्रतिश्लोकंशूलेनपाहिनोदेहिनोदेवीतिपाठादपमृत्युनाशः ॥ अस्यकेवलस्यापिश्लोकस्यलक्षमयुतंसहस्त्रंशतंवाजपे अपमृत्युवारणम् ॥ ५ ॥ प्रतिश्लोकंशरणागतदीनार्तेतिश्लोकंपठेत्सर्वकार्यसिद्धिः ॥ ६ ॥ प्रतिश्लोकंकरोतुसानःशुभेत्यर्द्धंपठेत्सर्वकार्य्यसिद्धिः ॥७॥ स्वाभीष्टवरप्राप्तयेएवंदेव्यावरंलब्ध्वेतिश्लोकंपठेत् ॥८॥ सर्वापत्तिवारणायप्रतिश्लोकंदुर्गेस्मृतेतिपठेत् ॥ अस्यकेवलस्यापिश्लोकस्यकार्यानुसारेणलक्षमयुतंसहस्त्रंशतंवाजपः ॥ ९ ॥ सर्वाबाधेत्यस्यलक्षजपेप्रतिश्लोकपाठेवाश्लोकोक्तफलम् ॥ १० ॥ इत्थंयदायदाबाधेतिश्लोकजपेमहामारीशांति ॥११॥ ततोवव्रेनृपोराज्यमितिमंत्रस्यजपेपुनःस्वराज्यलाभः ॥१२॥ हिनास्तिदैत्यतेजांसिइत्य

नेनसदीपबलिदानेघंटाबंधनेचबालग्रहशांतिः ॥१३॥ आद्या
वृत्तिमनुलोमेनपठित्वाततोविपरीतक्रमेणद्वितीयामनुलोमेन-
तृतीयाम् इत्येवमावृत्तित्रयेणशीघ्रंकार्यसिद्धिः ॥१४॥ सर्वा
पत्तिवारणायदुर्गेस्मृतेत्यर्द्धंततोयदंतियच्चदूरकेइत्यृचं तदंते-
दारिद्र्यदुःखेत्यर्द्धमेवंकार्यानुसारेण लक्षमयुतं सहस्रंशतंवाज
पः ॥१५॥ कांसोस्मीत्यृचंप्रतिश्लोकंपठेल्लक्ष्मीप्राप्तिः ॥१६॥
प्रतिश्लोकमनृणाअस्मिन्नित्यृचंपठेदृणपरिहारः ॥१७॥ मार-
णार्थम् एवमुक्त्वासमुत्पत्येतिश्लोकंम्प्रतिश्लोकंपठेन्मारणोक्ता
वृत्तिभिःफलसिद्धिः ॥१८॥ ज्ञानिनामपिचेतांसि इतिश्लोकज
पमात्रेणसद्योमोहनमित्यनुभवसिद्धम् ॥ प्रतिश्लोकंतच्छ्लोक
पाठेत्ववश्यं ॥१९॥ रोगानशेषानितिश्लोकस्यप्रतिश्लोकंपाठे
सकलरोगनाशः ॥ तन्मात्रजपेपिसः ॥२०॥ इत्युक्त्वासातदा
देवीगंभीरेतिश्लोकस्यप्रतिश्लोकंपाठेपृथग्जपेवाविद्याप्राप्तिर्वा
ग्वैकृतनाशश्च ॥२१॥ भगवत्याकृतंसर्वमित्यादि द्वादशोत्तर-
शताक्षरोमंत्रःसर्वकामदःसर्वापत्तिवारणश्च ॥२२॥ देविप्रप-
न्नार्त्तिहरे इतिश्लोकस्ययथाकार्यंलक्षायुतसहस्रशतान्यतमसं
ख्यजपेप्रतिश्लोकंपाठेवासर्वापन्निवृत्तिःसर्वकामाप्तिश्च ॥ एषु
प्रयोगेषु प्रतिश्लोकंदीपाग्रेकेवलमेव नमस्करणेऽतिशीघ्रंसि-
द्धिः ॥ प्रतिश्लोकंकामबीजसंपुटितस्यएकचत्वारिंशद्दिनंत्रिरा-
वृत्तौसर्वकामसिद्धिः ॥२३॥ एकविंशतिदिनपर्यन्तमुक्तरीत्या
प्रत्यहन्द्वादशावृत्तौवशीकरणम् ॥२४॥ मायाबीजसंपुटित

स्यफट्पल्लवसहितस्यसप्तदिनपर्यंतंत्रयोदशा वृत्तावुच्चाटन-सिद्धिः ॥२५॥ तादृश्यामेवदिनचतुष्टयमेकादशावृत्तौसर्वोप द्रवनाशः॥२६॥एकोनपंचाशद्दिनपर्यंतंप्रतिश्लोकंश्रीबीजसं पुटितस्यपंचदशावर्त्तौलक्ष्मीप्राप्तिः ॥२७॥ प्रतिश्लोकंवाग्बी जसंपुटितस्यशतावृत्त्याविद्याप्राप्तिः ॥२८॥ अथशतचंडीवि धिः ॥ शङ्करस्यभवान्यावाप्रासादनिकटेशुभम् ॥ मंडपंद्वार वेद्याढ्यंकुर्य्यात्सध्वजतोरणम् ॥१॥ तत्रकुंडंप्रकुर्वीतप्रती-च्यांमध्यतोपिवा ॥ स्नात्वानित्यक्रियांकृत्वावृणुयाद्दशवाडवान् ॥२॥ जितेंद्रियान्सदाचारान्कुलीनान्सत्यवादिनः ॥ वाडवा ब्राह्मणाः ॥ व्युत्पनांश्चण्डिकापाठरताँल्लज्जादयावतः ॥३॥ म धुपर्कविधानेनस्वर्णवस्त्रादिदानतः ॥ जपार्थमासनंमालांदद्या त्तेभ्योऽपिभोजनम् ॥४॥ तेहविष्यान्नमश्नंतोमंत्रार्थगतमान साः ॥ भूमौशयानाःप्रत्येकंजपेयुश्चंडिकास्तवम् ॥५॥ मार्कंडे यपुराणोक्तंदशकृत्वःसचेतसः ॥ नवार्णचंडिकामंत्रंजपेयुश्चायु तंपृथक्६ पृथक्संपुटाकरणादितिशेषः॥प्रत्येकम्ब्राह्मणैरयुत जपःकार्य्यः॥अष्टमीनवमीचतुर्दशीपौर्णमासीषुयथाशतावृत्ति समाप्तिर्भवतितथारंभःकर्त्तव्यइतिसांप्रदायिकाः॥यजमानःपू जयेच्चकन्यानांनवकंशुभम् ॥ द्विवर्षाद्यादशाब्दांताः कुमारीः परिपूजयेत् ॥१॥ तासांक्रमेणनामानि ॥ कुमारी १ त्रिमूर्त्तिः २ कल्याणी ३ रोहिणी ४ कालिका ५ शांभवी ६ दुर्गा ७ चंडिका ८ सुभद्रा ९ इतिनाममंत्रैस्तासांपूजा ॥ तत्रहीना

धिकांगीकुष्ठव्रणयुताअन्धाकाणा कुरूपाकेकराकुबरीलोमयु
ग्देहादासीजारोगिणीत्येवमाद्यावर्ज्याः ॥ विप्रांसर्वेष्टसंसिद्ध्यै
यशसेक्षत्रियोद्भवाम्॥ वैश्यजांधनलाभायपुत्रास्यैशूद्रजायजे
त् ॥ गंधपुष्पधूपदीपभक्ष्यभोज्यैर्यथाशक्तिवस्त्राभरणैश्चपूज
येत् ॥ द्विवर्षासाकुमार्युक्तात्रिमूर्तिर्हायनत्रिका ॥ ॥ ॥ ॥
चतुरब्दातुकल्याणीपंचवर्षातुरोहिणी ॥ १ ॥ षडब्दाकालि
काप्रोक्ताचंडिकासप्तहायना ॥ अष्टवर्षाशांभविस्याद्दुर्गातुन
वहायना ॥ सुभद्रादशवर्षोक्तानाममंत्रैःप्रपूजयेत् ॥ तासामा
वाहनेमंत्रःप्रोच्यतेशंकरोदितः ॥ मंत्राक्षरमयींलक्ष्मींमातृ
णांरुपधारिणीम्॥ नवदुर्गात्मिकांसाक्षात्कन्यामावाहयाम्य
हम् ॥ कुमारिकादिकन्यानाम्पूजामंत्रान्ब्रुवेऽधुना ॥ जगत्पू
ज्येजगद्वंद्येसर्वशक्तिस्वरूपिणि ॥ पूजांगृहाणकौमारिजग
न्मातर्नमोऽस्तुते ॥त्रिपुरांत्रिपुराधारांत्रिवर्षाज्ञानरुपिणिम्॥
त्रैलोक्यवंदितांदेवींत्रिमूर्तिंपूजयाम्यहम् ॥ कलात्मिकांकला
तीतांकारुण्यहृदयांशिवाम् ॥ कल्याणजननींदेवींकल्याणींपू
जयाम्यहम्॥ अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम्॥
अनंतशक्तिकांलक्ष्मींरोहिणींपूजयाम्यहम् ॥ कामचारींशुभां
कांतांकालचक्रस्वरुपिणीम् ॥ कामदांकरुणोदारांकालिकांपू
जयाम्यहम्॥ चंडवीरांचंडमायांचंडमुंडप्रभंजनीम्॥ पूजया
मिसदादेवींचंडिकांचंडविक्रमाम् ॥ सदानंदकरींशांतांसर्वदेव
नमस्कृताम् ॥ सर्वभूतात्मिकांलक्ष्मींशांभवींपूजयाम्यहम् ॥

दुर्गमेदुस्तरेकार्यभवदुःखविनाशिनीम् ॥ पूजयामिसदाभ
क्त्यादुर्गांदुर्गार्तिनाशिनीम् ॥ सुदरींस्वर्णवर्णाभांसुखसौभा
ग्यदायिनीम् ॥ सुभद्रजननींदेवींसुभद्रांपूजयाम्यहम् ॥ एत्रै
र्मंत्रैःपुराणोक्तैस्तांतांकन्यांसमर्चयेत् ॥ इतिपूजनंकुमारिका
णाम् ॥ वेद्यांविरचितेरम्येसर्वतोभद्रमंडले ॥ घटंसंस्थाप्य
विधिनातत्रावाह्यार्चयेच्छिवाम् ॥ तदग्रेकन्यकाश्चापिपुजये
द्ब्राह्मणानपि ॥ उपचारैस्तुविविधैर्नवार्णावरणानपि ॥ ॐका
रःप्रथमंपाठंपूर्णपीठमतःपरम् ॥ तृतीयंकामपीठंचपूंजयेत्सं
प्रदायतः ॥ पूर्वादिदिक्षुपीठस्यगणेशादिचतुष्टयम् ॥ गणेश
क्षेत्रपालौचपादुकेबटुकास्त्रयः ॥ आग्नेय्यादिचतुर्दिक्षुपूज्यन्दे
वीचतुष्टयम् ॥ जयाचविजयाचवैजयंतीचापराजिता ॥ पूर्वो
क्तयंत्रेपूर्वकोणे सरस्वतीसाहितो ब्रह्मा श्रीसहीतोविष्णुर्नैर्ऋ
त्यामुमयाशिवो वायव्यांषट्कोणे चक्रमध्यस्थमध्यबीजे श्री
महालक्ष्मीः ॥ ह्रींमहाकालीऐंमहासरस्वतीदक्षिणवामयोः ॥
उदक्सिंहोदक्षिणेमहिषः ॥ षट्कोणेषु नंदजा रक्तदंतिका
शाकंभरी दुर्गाभीमाभ्रामर्य्यः ॥ सबिन्दुनामाद्यवर्णताराद्या
श्चआसांनाममंत्राःपूजादौ ॥ तारःप्रणवः ॥ अष्टपत्रेषु ब्रह्मा
णीमाहेश्वरी कौमारीवैष्णवीवाराहीनारसिंहीऐंद्रीचामुंडा उ
क्तरीत्यानाममंत्रैःपूज्याः ॥ ततोविष्णुमायादिचतुर्विंशतिदेव
ताःप्रागादिक्रमेणकेसरेषुपूज्याः ॥ प्रतिपत्रंचकेसरत्रयम् ॥
ताश्चविष्णुमाया १ चेतना २ बुद्धि ३ निद्रा ४ क्षुधा ५ छाया ६

शक्ति ७ तृष्णा ८ क्षान्ति ९ जाति १० लज्जा ११ शान्ति १२ श्रद्धा १३ कांति १४ लक्ष्मी १५ धृति १६ वृत्ति १७ स्मृति १८ दया १९ तुष्टि २० पुष्टि २१ मातृ २२ भ्रांति २३ चिति २४ रूपाएतावत्यः ॥ सप्तशतीस्तवे पंचमेऽध्याये आसांचतुर्विंशतीनांनपाठइतिनभ्रमितव्यम् ॥ कात्यायनीतंत्रविराधोत् ॥ नालमूलेतुसंपूज्यआधारादिचतुष्टयम् ॥ आधारःकर्मशेषौचचतुर्थीपृथिवीनृप ॥ गृहकोणेषुगणेशःक्षेत्रपालोबटुकोयोगिन्यः ॥ प्रागादिदिक्षुइंद्राद्याश्चेति एवंचतुर्दिनं कुर्यात् ॥ तत्रप्रथमेह्निएकावृत्तिर्द्वितीयेद्वेतृतीयेतिस्रश्चतुर्थेच तस्रइति ॥ पंचमेहोमः ॥ होमद्रव्याणितु ॥ पायसान्नैस्त्रिमध्वक्तैर्द्राक्षारंभाफलादिभिः ॥ मातुलुंगैरिक्षुखंडैर्नालिकेरयुतैस्तिलैः ॥ जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिरिति ॥ सप्तशत्यादशावृत्त्याप्रतिमंत्रंहुतंचरेत् ॥ अयुतंचनवार्णेनस्थापितेऽग्नौविधानतः ॥ कृत्वावरणदेवानांहोमंतन्नाममंत्रतः ॥ कृत्वापूर्णाहुतिंसम्यग्देवमग्निंविसृज्यच ॥ अभिषिंचेच्चयष्टारंविप्रौघःकलशोदकैः ॥ निष्कंसुवर्णमथवाप्रत्येकंदक्षिणांदिशेत् ॥ भोजयेच्चशतंविप्रान्भक्ष्यभोज्यैःपृथग्विधैः ॥ तेभ्योपिदक्षिणांदत्वागृह्णियादाशिषस्तथा ॥ एवंकृतेजगद्वश्यंसर्वेनश्यंत्युपद्रवाः ॥ इतिशतचण्डीविधिः॥ श्रीजगदंबार्पणमस्तु

---

॥ श्रीगणेशायनमः ॥

# ॥ अथ सप्तशती प्रारभ्यते ॥

एतेषांश्रीदेव्याः कवचार्गलाकीलकानाम् ॥ हरिहर ब्रह्माणऋषयः ॥ अनुष्टुप्छंदः ॥ श्रीत्रिगुणात्मिकाचंडिकादेवता ॥ ममचतुर्विधपुरुषार्थसिद्ध्येजपेविनियोगः ॥ नमश्चंडिकायै ॥ ॥

॥ मार्कंडेयउवाच ॥

यद्गुह्यंपरमंलोकेसर्वरक्षाकरंनृणाम् ॥ यन्नकस्यचिदाख्यातंतन्मेब्रूहिपितामह ॥१॥

ટીકાઃ—માર્કંડેય બ્રહ્માને પુછે છે. હે ! પિતામહ, જે જગતમાં ઉત્તમ, છાનું ને સર્વ માણસોની રક્ષા કરનારૂં, ને કોઇને કહયું ન હોય તેવું રહસ્ય મને કહો. ॥ ૧ ॥

॥ ब्रह्मोवाच ॥ अस्तिगुह्यतमंविप्रसर्वभूतोपकारकम् ॥ देव्यास्तुकवचंपुण्यंतच्छृणुष्वमहामुने ॥२॥

ટીકાઃ—બ્રહ્મા જવાબ દેછે, હે ! બ્રાહ્મણ, હે ! મહા મુની અતી છાનું ને સરવ પ્રાણીઓને ઉપકાર કરનારૂં, પવિત્ર એવું જે દેવીનું કવચ તેને સાંભળ. ॥ ૨ ॥

प्रथमंशैलपुत्रीचद्वितीयंब्रह्मचारिणी ॥
तृतीयंचंद्रघंटेतिकूष्मांडेतिचतुर्थकम् ॥३॥

ટીકાઃ—હે! મુની, તે દેવીની નવ મુરતીઓછે, તેનું ધ્યાનકરવું એટલા વાસ્તે નવ મુરતીઓનાં નામ કહુંછું. પેહેલું શૈલપુત્રી, (પહાડની દીકરી) બીજું બ્રહ્મચારીણી ( બ્રહ્મની પ્રાપ્તી કરનારી ), ત્રીજું ચંદ્ર ઘંટા ( ચંદ્રના

જેવી ઉજ્વળ ઘંટાવાળી ), ચોથું કુષ્માંડા ( આખું જગત જેના ઉદરમાં છે એવી ). ॥ ૩ ॥

पंचमंस्कंदमातेतिषष्ठंकात्यायनीतिच ॥
सप्तमंकालरात्रिश्चमहागौरीतिचाष्टमम् ॥४॥

ટીકાઃ—પાંચમું સ્કંદમાતા, (કારતીક સ્વામીની મા ) છઠું કાત્યાયની, (કાત્યાયનના આશ્રમમાં પ્રગટેલી ) સાતમું કાળરાત્રી, (કાળનો પણ નાશ કરનારી ), આઠમું મહા ગૌરી, ( ગૌર વર્ણવાળી. ) ॥ ૪ ॥

नवमंसिद्धिदाप्रोक्तानवदुर्गाःप्रकीर्तिताः ॥
उक्तान्येतानिनामानिब्रह्मणैवमहात्मना ॥५॥

ટીકાઃ—નવમું સિદ્ધિદા, (સિદ્ધિ આપનારી) એવી રીતે નવદુર્ગા કેહેવાય છે. આ નવ નામો સર્વજ્ઞ વેદેંજ કહેલાંછે. ॥ ૫ ॥

अग्निनादह्यमानस्तुशत्रुमध्येगतोरणे ॥
विषमेदुर्गमेचैवभयार्ताःशरणंगताः ॥६॥

ટીકાઃ—અગ્નિથી બળતો હોય. લડાઇમાં શત્રુની સામો ગયેલો હોય, વિષમ અથવા કઠણ જગ્યાયે ગયેલો હોય, તેમાના હરકોઇ ભયથી પીડીત હોય ને શરણે જાય. ॥ ૬ ॥

नतेषांजायतेकिंचिदशुभंरणसंकटे ॥
नापदंतस्यपश्यामिशोकदुःखभयंनहि ॥७॥

ટીકાઃ—તેઓને લડાઈ વિગેરે દુઃખના વખતમાં કાંઇ પણ અવળું થતું નથી. તેની આપત્તીને હું દેખતો નથી. શોક દુઃખનો પણ ભય થતો નથી. ૭

यैस्तुभक्त्यास्मृतानूनंतेषांसिद्धिःप्रजायते ॥
प्रेतसंस्थातुचामुंडावाराहीमहिषासना ॥८॥

ટીકાઃ—જેણે ભકતીથી દેવીને યાદ કર્યાં હોય, તેઓને સિદ્ધિ [કાર્ય સિદ્ધિ] થાયછે. પ્રેત ઉપર બેઠેલી ચામુંડા, પાડા ઉપર બેઠેલી વારાહી, [વારાહી શકિત ] ॥ ૮ ॥

ऐंद्रीगजसमारूढावैष्णवीगरुडासना ॥
माहेश्वरीवृषारूढाकौमारीशिखिवाहना ॥९॥

ટીકાઃ—હાથી ઉપર બેઠેલી ઐંદ્રી [ ઇંદ્રી સકિત ] ગરૂડ ઉપર બેઠેલી વૈષ્નવી, [ વિશ્નુ શકિત ] અને પોઠીયાપર બેઠેલી માહેશ્વરી, [ શીવશક્તિ] ને મોર ઉપર બેઠેલી કૌમારી, [કારતીક સ્વામીની શકિત.] ॥૯॥

ब्राह्मीहंससमारूढासर्वाभरणभूषिता ॥
लक्ष्मीःपद्मासनादेवीपद्महस्ताहरिप्रिया ॥१०॥

ટીકાઃ—હંસપર બેઠેલી,ને સર્વ ઘરેણાંથી શોભીતી બ્રાહ્મી,[બ્રહ્માની શક્તિ] કમળ ઉપર બેઠેલી; જેના હાથમાં કમળછે એવી વીશ્નુને પ્રિય લક્ષ્મી.૧૦

इत्येतामातरःसर्वाःसर्वयोगसमन्विताः ॥
नानाभरणशोभाढ्यानानारत्नोपशोभिताः ॥११॥

ટીકાઃ—આ સાત માતૃકા સર્વ યોગે યુકત જુદી જુદી તરેહનાં ઘરેણાંથી શોભાયમાન, તરેહ તરેહનાં રત્નથી શોભીતીયો જોવામાં આવેછે. ॥૧૧॥

दृश्यंतेरथमारूढादेव्यःक्रोधसमाकुलाः ॥
शंखंचक्रंगदांशक्तिंहलंचमुसलायुधम् ॥१२॥

ટીકાઃ—રથ ઉપર બેઠેલીયો, ક્રોધથી ભરપૂર દેવીયો; શંખ, ચક્ર, ગદા, શકતી, [ સાંગ ] હળ મુશુલ, [ સાંબેલું.] ॥ ૧૨ ॥

खेटकंतोमरंचैवपरशुंपाशमेवंच ॥
कुंतायुधंत्रिशूलंचशार्ङ्गमायुधमुत्तमम् ॥१३॥

ટીકાઃ—ખેટક, [ઢાલ] તોમર, [ભાલુ] પરશુ, [ફરશી] પાશ, [પાસલો] કુંત, [બરછી] ત્રીશૂળ, ઉત્તમ શારંગ, [ધનુષ.] ॥ ૧૩ ॥

दैत्यानांदेहनाशायभक्तानामभयायच ॥
धारयंत्यायुधानीत्थंदेवानांचहितायवै ॥१४॥

ટીકાઃ—આ આયુધોને દૈત્યના દેહનો નાશ કરવા, ભકતોને અભય કર

વા, દેવોનાં કલ્યાણ વાસ્તે ધારણ કરેછે. ॥ १४ ॥

नमस्तेस्तुमहारौद्रेमहाघोरपराक्रमे ॥
महाबलेमहोत्साहेमहाभयविनाशिनि ॥१५॥

ટીકાઃ-હે! માહારૌદ્રા, હે! માહા ઘોર પરાક્રમવાળી, હે! મોહોટા બ-ળવાળી,હે! મોહોટા ઉત્સાહવાળી, હે! મહા ભયનો નાશ કરનારી, તમને નમસ્કાર કરૂંછું. ॥ १५ ॥

त्राहिमांदेविदुःप्रेक्ष्येशत्रूणांभयवर्धिनि ॥
प्राच्यांरक्षतुमामैंद्रीआग्नेय्यामग्निदेवता ॥१६॥

ટીકાઃ-હે! દેવી, શત્રૂઓને ભય વધારનાર, તથા જેની સામું દુશ્મન ન જોઈ શકે એવાં તમે,મ્હારૂં રક્ષણ કરો, ઐંદ્રી પૂર્વ દીશામાં માહારૂં રક્ષણ કરો. અગ્નિ દેવતા [શકતી] અગ્નિ ખુણમાં રક્ષણ કરો. ॥१६॥

दक्षिणेरक्षवाराहिनैर्ऋत्यांखड्गधारिणी ॥
प्रतीच्यांवारुणीरक्षेद्वायव्यांमृगवाहिनी ॥१७॥

ટીકાઃ-વારાહી દક્ષિણમાં રક્ષા કરો. ખડ્ગ ધરનારી નૈરૂત્ય ખુણમાં ર-ક્ષણ કરો વારૂણી પાશ્ચિમમાં રક્ષણ કરો.મૃગના વાહનવાળી વાયુ કોણમાં રક્ષણ કરો. ॥ १७ ॥

उदीच्यांरक्षकौबेरिईशान्यांशूलधारिणि ॥
उर्ध्वंब्रह्माणीमेरक्षेदधस्ताद्वैष्णवीतथा ॥१८॥

ટીઃ-હે! કૌબેરી, ઉત્તર દીશામાં રક્ષણ કરો. ત્રીશુળ ધારણ કરનાર ઇશાનમાં રક્ષણ કરો. હે! બ્રહ્માણી ઊંચે મ્હારૂં રક્ષણ કરો. વૈષ્નવી નીચે રક્ષણ કરો.१८

एवंदशदिशोरक्षेच्चामुंडाशबवाहना ॥
जयामेअग्रतःस्थातुविजयारथातुपृष्ठतः ॥१९॥

ટીકાઃ-એમ શબ ઉપર બેઠેલી ચામુંડા દશ દીશે રક્ષણ કરો. જયા મારી આગળ રહો. વીજયા વાંસે રહો. ॥ १९ ॥

अजितावामपार्श्वेंचदक्षिणेचापराजिता ॥
शिखांमेद्योतिनीरक्षेदुमामूर्ध्निव्यवस्थिता ॥२०॥

ટીકાઃ—અજીતા ડાબે પડખે ને અપરાજીતા જમણે પડખે રહો, દયોતીની પ્રકાશવાળી શકતી ) મ્હારી શીખાનું રક્ષણ કરો. ઉમા મ્હારા માથાનું રક્ષણ કરો. ॥ ૨૦ ॥

मालाधरीललाटेचभ्रुवौरक्षेद्यशस्विनी ॥
त्रिनेत्रानेत्रयोर्मध्येयमघंटाचनासिके ॥२१॥

ટીકાઃ—માળાને ધારણ કરનારી કપાળમાં (રક્ષણ કરવા)રહો. યશસ્વિની ( જશવાળી ) ભવાંનું રક્ષણકરો. ત્રીનેત્રા બે નેત્રની વચમાં રહો. યમઘંટા નાસીકાનું રક્ષણ કરો. ॥ ૨૧ ॥

शंखिनीचक्षुषोर्मध्येश्रोत्रयोर्द्वारवासिनी ॥
कपोलौकालिकारक्षेत्कर्णमूलेचशांकरी ॥२२॥

ટીકાઃ—શંખિની આંખની વચમાં રક્ષાકરો. ને દ્વારવાસિની બે કાનની રક્ષા કરો. કાળીકા કપોળનું [ગાલનું] રક્ષણ કરો. ને શાંકરી કાંનના મૂળનું રક્ષણ કરો. ॥ ૨૨ ॥

नासिकायांसुगंधाचउत्तरोष्ठेतुचर्चिका ॥
अधरेचामृतकलाजिव्हायांचसरस्वती ॥२३॥

ટીકાઃ—નાકમાં સુગંધાદેવી રક્ષા કરો. ઉપલા હોઠમાં ચરચિકા, હેઠલા હોઠમાં અમૃતકલા, ને જીભમાં સરસ્વતી રક્ષા કરો. ॥ ૨૩ ॥

दंतान्रक्षतुकौमारीकंठमध्येचचंडिका ॥
घंटिकांचित्रघंटाचमहामायाचतालुके ॥२४॥

ટીકાઃ—કોમારી દાંતનું રક્ષણ કરો, ને ચંડીકા કંઠની વચમાં રક્ષા કરો. ચીત્રઘંટા ઘંટીકાનું ( ડાઢીથી નીચલા ભાગનું ) રક્ષણ કરો. મહા માયા તાળવામાં રક્ષા કરો. ॥ ૨૪ ॥

कामाक्षीचिबुकंरक्षेद्वाचंमेसर्वमंगला ॥

ग्रीवायांभद्रकालीचपृष्ठवंशेधनुर्धरी ॥२५॥

ટીકાઃ-કામાક્ષી ડાઢીનું રક્ષણ કરો. સર્વમંગળા મ્હારી વાણીનું રક્ષણકરો. ભદ્રકાળી ગળામાં રક્ષા કરો. ધનુષધારણ કરનારી બરડામાં રક્ષણ કરો.૨૫

नीलग्रीवाबहिःकंठेनलिकांनलकूबरी ॥
खड्गधारिण्युभौस्कंधौबाहूमेवज्रधारिणी ॥२६॥

ટીકાઃ-નીલગ્રીવા ગળાની બહાર રક્ષા કરો. નલ કુબરી ગલાની નળીનું રક્ષણ કરો. ખડગ ધારણ કરનારી બે ખભાનું રક્ષણ કરો. વજર ધારણ કરનારી મ્હારા બે બાહુનું રક્ષણ કરો. ॥ ૨૬ ॥

.हस्तोतुदंडिनीरक्षेदंबिकाचांगुलीस्तथा ॥
नखान्शूलेश्वरीरक्षेत्कुक्षौरक्षेन्नलेश्वरी ॥२७॥

ટીકાઃ-દંડીની દેવી હાથનું રક્ષણ કરો. અંબીકા આંગળીયોનું રક્ષણ કરો. શૂલેશ્વરી નખનું રક્ષણ કરો. નલેશ્વરી કુખનું રક્ષણ કરો. ॥૨૭॥

स्तनौरक्षेन्महादेवीमनःशोकविनाशिनी ॥
हृदयेललितादेवीउदरेशूलधारिणी ॥

ટીકાઃ-મનના શોકને ટાળનારી મહાદેવી, સ્તનનું રક્ષણ કરો. લલીતા હૃદયનું રક્ષણ કરો, શૂલધારીણી ઉદરનું (પેટનું) રક્ષણ કરો. ॥ ૨૮ ॥

नाभिंचकामिनीरक्षेद्गुह्यंगुह्येश्वरीतथा ॥
कट्योर्भगवतीरक्षेज्जानुनीविंध्यवासिनी ॥२९॥

ટીકાઃ-કામીની નાભીનું રક્ષણકરો. ગુહયેશ્વરી ગુહ્યનું રક્ષણકરો.ભગવતી [ સર્વ ગુણ સંપન્ન ) કેડનું રક્ષણ કરો. વિંધ્યવાસીની ગોઠણનું રક્ષણ કરો. ॥ ૨૯ ॥

जंघेमहाबलाप्रोक्तासर्वकामप्रदायिनी ॥
गुल्फयोर्नारसिंहीचपादपृष्ठेमितौजसी ॥३०॥

ટીકાઃ-સર્વ કામને દેનારી મહાબલા જાંઘનું રક્ષણ કરો. નારસીંહી બે ઘુંટીયુંનું રક્ષણ કરો. અપાર પરાક્રમી દેવી પગનાં તલીઆંનું રક્ષણ કરો. ॥૩૦

पादांगुलीःश्रीधरीचपादाधस्तलवासिनी ॥
दंष्ट्राःकरालिनीरक्षेत्केशांश्चैवोर्ध्वकेसिनी ॥३१॥

ટીકાઃ–શ્રીધરી પગની આંગળીયોની રક્ષા કરો. પગનાં તળીયાંમાં રહેનારી પગની નીચે તળાની રક્ષા કરો. કરાલીની દાઢનું રક્ષણ કરો. ઉર્ધ્વકેશીની [ઊંચા કેશવાળી] કેશનું રક્ષણ કરો. ॥૩૧॥

रोमकूपाणिकौबेरीत्वचंवागीश्वरीतथा ॥
रक्तमज्जावसामांसान्यस्थिमेदांसिपार्वती ॥३२॥

ટીકાઃ–કૌબેરી રૂવાંના છીદ્રની રક્ષા કરો. વાગીશ્વરી [વાણીની નીયંતા] ચામડીનું રક્ષણ કરો. પાર્વતી, લોહી, મજ્જા [ હાડકાનો ચીકણું પદાર્થ) ચરબી, માંસ, અસ્થી ને મેદનું રક્ષણ કરો. ॥ ૩૨ ॥

अंत्राणीकालरात्रिश्चपित्तंचमुकुटेश्वरी ॥
पद्मावतीपद्मकोशेकफेचूडामणीतथा ॥३३॥

ટીકાઃ–કાળરાત્રી આંતરડાનું રક્ષણ કરો. ને મુકટેશ્વરી પીત્તનું રક્ષણ કરો. પદમાવતી પદમકોશ [હૃદય કમળનું] રક્ષણ કરો. ચુડામણી કફનું રક્ષણ કરો. ॥૩૩॥

ज्वालामुखीनखज्वालामभेद्यासर्वसंधिषु ॥
शुक्रंब्रह्माणिमेरक्षेच्छायांछत्रेश्वरीतथा ॥३४॥

ટીકાઃ–જવાળામુખી નખના તેજનું રક્ષણ કરો. ભેદી ન શકાય એવી દેવી સર્વ સંધીઓનું રક્ષણ કરો. બ્રહ્માણી મારા શુક્રનું [વીર્યનુ) રક્ષણ કરો. છતરેશ્વરી છાયાનું રક્ષણ કરો. ॥ ૩૪ ॥

अहंकारंमनोबुद्धिंरक्षमेसर्वधारिणि ॥
प्राणापानौतथाव्यानमुदानंचसमानकम् ॥३५॥

કીકાઃ–સર્વને ધારણ કરનારાં દેવી મ્હારા અહંકાર, મન, બુદ્ધિ, પ્રાણ, અપાન, વ્યાન, ઊદાન, ને સમાન વાયુનું રક્ષણ કરો. ॥ ૩૫ ॥

वज्रहस्ताचमेरक्षेत्प्राणंकल्याणशोभना ॥

रसेरूपेचगंधेचशब्देस्पर्शेचयोगिनी ॥३६॥

ટીકાઃ—જેના હાથમાં વજર છે એવી, કલ્યાણ કરવામાં કુશળ દેવી મ્હારા પ્રાણનું રક્ષણ કરો. અને યોગીની દેવી રસ, રૂપ, ગંધ, શબ્દ ને સ્પર્શનું રક્ષણ કરો. ॥ ૩૬ ॥

सत्वंरजस्तमश्चैवरक्षेन्नारायणीसदा ॥
आयुर्मेरक्षवाराहिधर्मंरक्षतुभैरवी ॥३७॥

ટીકાઃ—હે! વારાહી, તમે મ્હારા આયુષ્યનું રક્ષણ કરો. ભૈરવી દેવી ધર્મનું રક્ષણ કરો. ॥ ૩૭ ॥

यशःकीर्तिचलक्ष्मिंचसदारक्षंतुमातरः ॥
गोत्रमिंद्राणीमेरक्षेत्पशून्मेरक्षचंडिके ॥३८॥

ટીકાઃ—સાત માતૃકાઓ જય, કીરતી, ને લક્ષ્મીનું હમેશાં રક્ષણ કરો, હે! ઇંદ્રાણી, તમે મ્હારા વંશનું રક્ષણ કરો, હે ! ચંડીકા તમે મ્હારા પશુનું રક્ષણ કરો. ॥ ૩૮ ॥

पुत्रान्रक्षेन्महालक्ष्मीर्भार्यांरक्षतुभैरवी ॥
धनेश्वरीधनंरक्षेत्कौमारीकन्यकास्तथा ॥३९॥

ટીકાઃ—મહાલક્ષ્મી પુત્રનું રક્ષણ કરો, ભૈરવી દેવી મ્હારી પુત્રીનું રક્ષણ કરો, ધનેશ્વરી ધનનૂં રક્ષણ કરો, ને કઉમારી કન્યાની રક્ષા કરો. ॥૩૯॥

मार्गंक्षेमकरीरक्षेद्विजयासर्वतःस्थिता ॥
राजद्वारेमहालक्ष्मीःसंग्रामेजयवर्धिनी ॥४०॥

ટીકાઃ—સુખ શાન્તી કરનારી માર્ગે રક્ષા કરો, ને વિજયા ચારે તરફ રહીને રક્ષણ કરો, મ્હાલક્ષ્મી રાજદ્વારમાં રક્ષણ કરો, જય વધારનારી યુદ્ધમાં રક્ષણ કરો. ॥ ૪૦ ॥

सर्वरक्षाकरंपुण्यंकवचंसर्वदाजपेत् ॥
इदंरहस्यंविप्रर्षेभक्त्यातवमयोदितम् ॥४१॥

ટીકાઃ-સર્વની રક્ષા કરનાર પવીત્ર, આ કવચનો હમેશાં પાઠ કરવો. હે! બ્રહ્મરૂષી, આ છાનું કવચ ભકિતથી મેં તુને કહયું. ॥ ૪૧ ॥

रक्षाहीनंतुयत्स्थानंवर्जितंकवचेनतु ॥
तत्सर्वंरक्षमेदेविजयंतीपापनाशिनि ॥४२॥

ટીકાઃ-રક્ષા વિનાનું જે સ્થાન તથા કવચમાં ન કર્યેલું જે સ્થાન, તે બધા સ્થાનની રક્ષા.કરો. કારણ કે પાપને નાશ કરનારી તે સર્વથી ઊત્તમ છે. ॥ ૪૨ ॥

पदमेकंनगच्छेत्तुयदीच्छेच्छुभमात्मनः ॥
कवचेनावृतोनित्यंयत्रयत्रहिगच्छति ॥४३॥

ટીકાઃ-જો પોતાના શુભને ઇચ્છે તો કવચને મેલીને એક ડગલું પણ જાવું નહીં. કવચથી વીંટાએલો માણસ જેજે ઠેકાણે જાયછે. ॥ ૪૩ ॥

तत्रतत्रार्थलाभश्चविजयःसार्वकामिकः ॥
यंयंचिंतयतेकामंतंतंप्राप्नोतिनिश्चितम् ॥४४॥

ટીકાઃ-ત્યાં ત્યાં અર્થનો લાભ અને સર્વ કામના પુરી પડે એવી રીતે જય થાયછે. જેજે કામના ચીતવે તે તેને મળે. ॥ ૪૪ ॥

परमैश्वर्यमतुलंप्राप्स्यतेभूतलेपुमान् ॥
निर्भयोजायतेमर्त्यःसंग्रामेष्वपराजितः ॥४५॥

ટીકાઃ-અને પૃથ્વિમાં તે પુરૂષ અપાર પરમૈશ્વર્ય એટલે સંપત્તિને પામે, નીર્ભય થાય, અને લડાઇમાં પરાજય ન પામે. ॥ ૪૫ ॥

त्रैलोक्येतुभवेत्पूज्यःकवचेनावृतःपुमान् ॥
इदंतुदेव्याःकवचंदेवानामपिदुर्लभम् ॥४६॥

ટીકાઃ-કવચથી વીંટાએલો માણસ ત્રીલોકીમાં પુજવા લાયક થાય, આ દેવીનું કવચ દેવતાઓને પણ દુર્લભ છે. ॥ ૪૬ ॥

यःपठेत्प्रयतोनित्यंत्रिसंध्यंश्रद्धयान्वितः ॥

दैवीकलाभवेत्तस्यत्रैलोक्येलपराजितः ॥४७॥

ટીકાઃ—જે માણસ હમેશાં સવાર, બપોર, તથા સાંઝે શ્રદ્ધા સહીત પાઠ કરેતો તેનું સ્વરૂપ દેવતા જેવું થઇ જાય ને ત્રીલોકીમાં તેને કોઈ જીતે નહીં. ॥ ૪૭ ॥

जीवेद्वर्षशतंसाग्रमपमृत्युविवर्जितः ॥
नश्यंतिव्याधयःसर्वेलूताविस्फोटकादयः ॥४८॥

ટીકાઃ—અને પાઠ કરનારા માણસનું અકાળ મૃત્યુ ન થાય ને સૌ કરતાં વધારે વર્ષ જીવે, ને ઝાડા, ગુમડાં વિગેરે બધા રોગોનો નાશ થાય. ॥૪૮॥

स्थावरंजंगमंवापिकृत्रिमंचापियद्विषं ॥
अभिचाराणिसर्वाणिमंत्रयंत्राणिभूतले ॥४९॥

ટીકાઃ—સ્થાવર એટલે સોમલ વિગેરે, જંગમ એટલે સર્પાદીક ઝેર વિગેરે, કૃત્રીમ એટલે કરેલું ઝેર, બધા મારણ પ્રયોગો, પ્રથ્વિની અંદરનાં મંત્ર, યંત્ર. ॥ ૪૯ ॥

भूचराःखेचराश्चैवजलजाश्चोपदेशिकाः ॥
सहजाःकुलजामालाडाकिनीशाकिनीतथा ॥५०॥

ટીકાઃ—ભુચર, [ પૃથ્વિપર ફરનારા ] આકાશમાં ફરનારા, જળમાં થયેલા, ઉપદેશ કરવાથી ફળે એવા, હલકા દેવતાઓ. સહજ, કુલજ, માલા, શાકિની, ડાકણ. ॥ ૫૦ ॥

अंतरिक्षचराघोराडाकिन्यश्चमहाबलाः ॥
ग्रहभूतपिशाचाश्चयक्षगंधर्वराक्षसाः ॥५१॥

ટીકાઃ—આકાશમાં ફરનાર મહા બળવાળી ઘોર ડાકણ, ગ્રહ, ભૂત, પીશાચ, યક્ષ, ગંધર્વ, રાક્ષસ. ॥ ૫૧ ॥

ब्रह्मराक्षसवेतालाःकूष्मांडाभैरवादयः ॥
नश्यंतिदर्शनात्तस्यकवचेहृदिसंस्थिते ॥५२॥

ટીકાઃ- બ્રહ્મરાક્ષસ, વૈતાલ, કુષ્માંડ, ભૈરવ, વિગેરે સર્વ, જેના હૃદયમાં કવચછે તેવા માણસનાં દરશનથી નાશી જાયછે. ॥ ૫૨ ॥

मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरंपरम् ॥
यशसावर्धतेसोपिकीर्तिमंडितभूतले ॥५३॥

ટીકાઃ-કવચથી કરી રાજાપાસે માન વધે, અને તેજની વૃદ્ધી થાય; એ માણસ કીરતીથી પૃથ્વિમાં શોભી રહેછે. ॥ ૫૩ ॥

जपेत्सप्तशतींचंडींकृत्वातुकवचंपुरा ॥
यावद्भूमंडलंधत्तेसशैलवनकाननम् ॥५४॥

ટીકાઃ-પેહેલાં કવચ ભણીને સપ્તશતીનો પાઠ કરેતો; પાહાડ અરણ્યે સહીત આખી પૃથ્વિનું રાજ કરે. ॥ ૫૪ ॥

तावत्तिष्ठतिमेदिन्यांसंततिःपुत्रपौत्रिकी ॥
देहांतेपरमंस्थानंयत्सुरैरपिदुर्लभम् ॥५५॥

ટીકાઃ-પૃથ્વિમાં પુત્ર પૌત્રનો વેલો ચાલ્યા કરે, દેહનો અંત થયા પછી દેવતાનેપણ ન મળે એવું ઉત્તમ સ્થાન માહામાયાનિ કૃપાથી મેળવે.૫૫

प्राप्नोतिपुरुषोनित्यंमहामायाप्रसादतः ॥
तत्पदंसमवाप्नोतियावदाभूतसंप्लवम् ॥५६॥

ટીકાઃ-અને માહામાયાની કૃપાથી જગતનો પ્રલય થાય ત્યાંહાંસુધી પરમપદને ભોગવ્યા કરે. ॥ ૫૬ ॥

॥ इतिश्रीहरिहरब्रह्मविरचितंदेव्याःकवचं
संपूर्णम् ॥

ટીકાઃ-હરીહર બ્રહ્માનું રચેલું દેવીનું કવચ પુરૂં થયું. ॥

———0*0———

॥ मार्कंडेयउवाच ॥

जयंतीमंगलाकालीभद्रकालीकपालिनी ॥
दुर्गाक्षमाशिवाधात्रीस्वाहास्वधानमोस्तुते ॥१॥

ટીકાઃ—માર્કંડેય રૂષી સ્તુતિ કરેછે. જયંતી. ( સર્વથી ઊંચી ) મંગળા, ( મંગળ કરનારી ) કાળી, ( સર્વને ભક્ષણ કરનારી ) ભદ્ર કાળી, ( ભક્તનું કલ્યાણ કરનારી ) કપાલીની, [ ખોપરી ધારણ કરનારી ] દુર્ગા, ( દુઃખે કરીને મળે એવી ) ક્ષમા, [ ક્ષમા કરનારી ] શીવા, [ સુખરૂપી] ધાત્રી, ( ધારણ કરનારી ) સ્વાહા [ દેવતાઓને પોષણ કરનારી ] સ્વધા [ પીતૃને પોષણ કરનારી ] એવી જે તું તેને નમસ્કાર હો. ॥ ૧ ॥

मधुकैटभविद्राविविधातृवरदेनेमः ॥
रूपंदेहिजयंदेहियशोदेहिद्विषोजहि ॥२॥

ટીકાઃ—મધુકૈટભને નાશ કરનાર, બ્રહ્માને વર દેનાર એવાં જે તમે તેને નમસ્કાર. રૂપ, જય ને યશને આપો. શત્રુને મારો. ॥ ૨ ॥

महिषासुरनिर्नाशिविधात्रीवरदेनमः ॥ रूपं० ॥३॥

ટીકાઃ—મહીષાશુરને નાશ કરનાર, ભક્તને વર દેનાર હે વિધાત્રી તમને નમસ્કાર, રૂપ, જય, ને યશને આપો. શત્રુને મારો. ॥ ૩ ॥

रक्तबीजवधेदेविचंडमुंडविमर्दिनी ॥ रूपं० ॥४॥

ટીકાઃ—રક્તબીજને અને ચંડમુંડને નાશ કરનારી, હે! દેવી, રૂપ, જય ને યશને આપો. શત્રુને મારો. ॥ ૪ ॥

निशुंभशुंभनोर्नाशितथाधूम्राक्षमर्दिनि ॥ रूपं० ॥५॥

ટીકાઃ—શુંભ, નિશુંભ, તથા ધુમ્રાક્ષને નાશ કરનાર, રૂપ, જય, ને યશને આપો. શત્રુને મારો. ॥ ૫ ॥

वंदितांघ्रियुगेदेवैर्देविसौभाग्यदायिनि ॥ रूपं० ॥६॥

ટીકાઃ—દેવતાઓ જેનાં ચરણને નમેછે એવી હે ! દેવી. હે ! સૌભાગ્ય

દેનારી, રૂપ, જય, ને યશને આપો. શત્રુને મારો. ॥ ૬ ॥

अचिंत्यरूपचरितेसर्वशत्रुविनाशिनि ॥ रूपं० ॥७॥

ટીકાઃ—જેનું રૂપને ચરિત્ર વિચારવામાં નથી આવતું એવીને સર્વ શત્રુને નાશ કરનારી, રૂપ, જય, ને યશને આપો. શત્રુને મારો. ॥ ૭ ॥

नतेभ्यःसर्वदाभक्त्याचंडिकेदुरितापहे ॥ रूपं ॥८॥

ટીકાઃ—હમેશાં ભકતીથી નમેલા માણસનાં પાપને નાશ કરનારી, રુપ, જય, ને યશને આપો, શત્રુને મારો. ॥ ૮ ॥

स्तुवद्भ्योभक्तिपूर्वंत्वांचंडिकेव्याधिनाशिनि ॥रूपं० ॥९॥

ટીકાઃ—ભકતી પુર્વક સ્તુતિ કરનારની પીડાને નાશ કરનાર હે! ચંડી, રુપ, જય, ને યશને આપો. શત્રુને મારો. ॥ ૯ ॥

चंडिकेसततंयेत्वामर्चयंतीहभक्तितः ॥ रूपं० ॥१०॥

ટીકાઃ—હે! ચંડી આ જગતમાં જે ભકિતથી તમારું નિરંતર પુજન કરેછે, તેને રૂપ, જય, ને યશ આપો. શત્રુને મારો. ॥ ૧૦ ॥

देहिसौभाग्यमारोग्यंदेहिदेविपरंसुखम् ॥रूपं० ॥११॥

ટીકાઃ—હે! દેવી, સૌભાગ્ય, આરોગ્ય, ને પરમ સુખને આપો. રુપ, જય, ને યશને આપો, શત્રુને મારો. ॥ ૧૧ ॥

विधेहिदेविकल्याणंविधेहिविपुलांश्रियम् ॥रूपं०॥१२॥

ટીકાઃ—હે! દેવી, કલ્યાણને ઘણી સંપત્તિ કરો. રુપ, જય ને યશને આપો. શત્રુને મારો. ॥ ૧૨ ॥

विधेहिद्विषतांनाशंविधेहिबलमुच्चकैः ॥ रूपं ॥१३॥

ટીકાઃ—હે! દેવી, અમારા દુશ્મનોને મારો ને અમારું અતિ બળ વધારો. રુપ, જય, ને યશને, આપો. શત્રુને મારો. ॥ ૧૩ ॥

सुरासुरशिरोरत्ननिघृष्टचरणेऽबिके ॥ रूपं० ॥१४॥

ટીકાઃ—હે! દેવી, જેના ચરણમાં દેવતાઓ ને દૈત્યોનાં મસ્તકનાં રત્નો

વસાયેલાં છે. એવાં તમે રુપ, જય, ને યશને આપો. શત્રુને મારો. ॥૧૪॥

विद्यावंतंयशस्वंतंलक्ष्मीवंतंजनंकुरु ॥ रूपं० ॥१५॥

ટીકાઃ–માણસોને વિદ્યાવાન, જશવાન, ને લક્ષ્મીવાન કરો. રુપ, જય, ને યશને આપો. શત્રુને મારો. ॥ ૧૫ ॥

प्रचंडदैत्यदर्पघ्नेचंडिकेप्रणतायमे ॥ रूपं० ॥१६॥

ટીકાઃ–હે! મોહોટા દૈત્યના ગર્વને નાશ કરનાર, હે! દેવી, નમેલો જે હુ તેને રુપ, જય, ને યશને આપો. શત્રુને મારો. ॥ ૧૬ ॥

चतुर्भुजेचतुर्वक्त्रसंस्तुतेपरमेश्वरि ॥ रूपं० ॥१७॥

ટીકાઃ–હે! ચારભુજાવાળી, હે! બ્રહ્માએ સ્તુતિ કરાએલી, હે! પરમેશ્વરી, રુપ, જય, ને યશને આપો. શત્રુને મારો. ॥૧૭॥

कृष्णेनसंस्तुतेदेविशश्वद्भक्त्यासदांबिके ॥ रूपं० ॥१८॥

ટીકાઃ–વિષ્નુયે ભકિતથી હમેશાં સ્તુતિ કરાયેલી હે! અંબીકા દેવી, રુપ, જય, ને યશને આપો. શત્રુને મારો. ॥ ૧૮ ॥

हिमाचलसुतानाथसंस्तुतेपरमेश्वरि ॥ रूपं० ॥१९॥

ટીકાઃ–હિમાલયની પુત્રી પાર્વતીના પતી શંકરે સ્તુતિ કરાયેલી હે! દેવી, રુપ, જય, ને યશને આપો. શત્રુને મારો. ॥ ૧૯ ॥

इंद्राणीपतिसद्भावपूजितेपरमेश्वरि ॥ रूपं० ॥२०॥

ટીકાઃ–ઇંદ્રાણીના પતી [ ઇંદરે ] સારા ભાવથી પુજેલી હે! પરમેશ્વરી, રુપ, જય, ને યશને, આપો. શત્રુને મારો. ॥ ૨૦ ॥

देविप्रचंडदोर्दंडदैत्यदर्पविनाशिनि ॥ रूपं ॥२१॥

ટીકાઃ–મ્હોટા મ્હોટા દંડ જેવા બાહુથી દૈત્યના ગર્વને નાશ કરનારી હે! દેવી, રૂપ, જય, ને યશને આપો. શત્રુને મારો. ॥ ૨૧ ॥

देविभक्तजनोद्दामदत्तानंदोदयेंबिके ॥ रूपं० ॥२२॥

ટીકાઃ-ભક્ત જનને ઘણો આનંદનો ઉદય આપનારી, હે! દેવી, હે! અંબીકા, રૂપ, જય, ને યશને આપો. શત્રૂને મારો. ॥ ૨૨ ॥

पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ रूपं ॥२३॥

ટીકાઃ- મને દીકરા, ધન, અને સર્વ કામનાઓ આપો. રૂપ, જય, યશને આપો. શત્રુને મારો. ॥ ૨૩ ॥

पत्नींमनोरमांदेहिमनोवृत्तानुसारिणीम् ॥
तारिणींदुर्गसंसारसागरस्यकुलोद्भवाम् ॥२४॥

ટીકાઃ-મનને ખુશી કરનારી, મનની ઇચ્છા પ્રમાણે ચાલનારી, ગંભીર સંસાર સમુદ્રથી પાર ઉતારનારી, સત્કૂળમાં જન્મેલી, સ્ત્રી મને આપો. ॥ ૨૪ ॥

इदंस्तोत्रंपठित्वातुमहास्तोत्रंपठेन्नरः ॥
सतुसप्तशतींसंख्यावरमाप्नोतिसंपदः ॥२५॥

ટીકાઃ- જે માણસ આ સ્તોત્રનો પાઠ કરીને મહા સ્તોત્ર સપ્તશતીનો પાઠ કરે, તેને સપ્તશતીના જપની સંખ્યાનું ફળ, ને સંપત્તિ મલે. ॥૨૫॥

॥ इतिविष्णुविरचितार्गलास्तुतिः ॥ समाप्ता ॥

॥ વિષ્નુયે રચેલી અર્ગલા સ્તુતી પુરી થઈ.

---

॥ मार्कंडेयउवाच ॥

विशुद्धज्ञानदेहायत्रिवेदीदिव्यचक्षुषे ॥
श्रेयःप्राप्तिनिमित्तायनमःसोमार्धधारिणे ॥१॥

ટીકાઃ- નિર્મળજ્ઞાન રૂપી જેનું સ્વરૂપછે, ત્રણ વેદરૂપી જેની દીવ્યચક્ષુ છે, ને જે કલ્યાણની પ્રાપ્તિનું કારણછે, તથા જેણે અર્ધચંદ્ર ધારણ કરેલો છે. એવા માહાદેવજીને નમસ્કાર. ॥ ૧ ॥

सर्वमेतद्विनायस्तुमंत्राणामभिकीलकम् ॥
सोपिक्षेममवाप्नोतिसततंजाप्यतत्परः ॥२॥

ટીકાઃ- આ સપ્તશતી સ્તોત્ર, મંત્રોની સીદ્ધિને અટકાવનાર શાપ રૂપી કીલકને નાશ કરનારૂં છે. કદાચિત સ્તોત્ર વિનાપણ હમેશાં મંત્રના જપમાં તત્પર રહે; તોપણ સર્વ કલ્યાણને પામે. ॥ ૨ ॥

सिध्यंत्युच्चाटनादीनिवस्तूनिसकलान्यपि ॥
एतेनस्तुवतादेवीस्तोत्रमंत्रेणासिध्यति ॥३॥

ટીકાઃ- ઉચ્ચાટન વિગેરે સર્વ પ્રયોગ સિદ્ધ થાયછે, અને આ સ્તોત્રનાં હરેક મંત્રથી સ્તુતી કરનારને દેવી પ્રસન્ન થાયછે. ॥ ૩ ॥

नमंत्रोनौषधंतत्रनकिंचिदपिवर्तते ॥
विनाजाप्येनसिध्येतसर्वमुच्चाटनादिकम् ॥४॥

આ સપ્તશતી સ્તોત્રની ઉપાસના કરનારને મંત્ર તથા ઔષધ વિગેરેની જરુર નથી. જપ કર્યાવીના સર્વ ઉચ્ચાટન વિગેરે કાર્ય સીદ્ધ થાયછે. ॥૪॥

समस्तान्यपिसिध्यंतिलोकशंकामिमांहरः ॥
कृत्वानिमंत्रयामाससर्वमेवमिदंशुभम् ॥५॥

ટીકાઃ- સપ્તશતી સ્તોત્ર અને બીજા મંતરોના જપથી સર્વ કાર્ય સીદ્ધિ થાયછે. વાસ્તે બેઉમાં સારૂં કહયું ! એવી લોકોની શંકા શીવજી પોતાના મનમાં લેઇને સર્વ લોકોને બોલીને કહયું કે આ સપ્તશતી સ્તોત્ર સર્વથી ઉત્તમ છે. ॥ ૫ ॥

स्तोत्रंवैचंडिकायास्तुतच्चगुह्यंचकारसः ॥
समाप्तिर्नचपुण्येनतांयथावन्नियंत्रणाम् ॥६॥

ટીકાઃ- શીવજીએ ચંડીકાનું સ્તોત્ર (સપ્તશતી સ્તોત્ર) સારૂં જાણી છાનું રાખ્યું, કારણ કે બીજા મંત્રનાં જપનાં પુણ્યમો પાર આવે છે. પણ આ ચંડીનાં પુન્યનો પાર આવતો નથી એમ સમજવું. ॥ ૬ ॥

सोपिक्षेममवाप्नोतिसर्वमेवनसंशय ॥
कृष्णायांचचतुर्दश्यामष्टम्यांवासमाहितः ॥७॥

ટીકાઃ—મંત્ર જપ કરનારો કલ્યાણ પામે એમાં શક નહીં, પણ આ સપ્તશતી જેવું ફળ આપનાર નહી. અંધારી ચૌદસ તથા અંધારી આઠમને દીવસે એકાગ્ર ચીત્ત કરી. ॥ ૭ ॥

ददातिप्रतिगृण्हातिनान्यथैषापसीदति ॥
इत्थंरूपेणकीलेनमहादेवेनकीलितम् ॥ ८ ॥

ટીકાઃ--ભક્ત પોતાનું સરવ ધન દેવીને અર્પણ કરેછે, અને દેવીની રજા લેઇ કેવળ નિર્વાહને વાસ્તે પાછું લેછે; આવી રીતે દેવીને આધીન રહે તો તેને દેવી પ્રસન્ન થાયછે. પણ બીજાને થતી નથી. માહાદેવે જાણ્યું કે બધા દેવીની કૃપાથી ઇશ્વર થઈ જશે એટલા સારૂ આ સ્તોત્ર ખીલ્યુંછે.૮

योनिःकीलांविधायैनांनित्यंजपतिसंस्फुटम् ॥
ससिद्धःसगणःसोपिगंधर्वोजायतेवने ॥९॥

ટીકાઃ--જે પુરૂષ આ સપ્તશતીને નીઃકીલ [ખીલા વનાનું] કરીને સારી રીતે જપ કરે. તે સીદ્ધ દેવીનો ગણ અને જગતની રક્ષા કરવામાં ગંધર્વ ( રક્ષણ કરવાવાળો એક દેવ ) થાય. ॥ ૯ ॥

नचैवाप्यटतस्तस्यभयंक्वापीहजायते ॥
नापमृत्युवशंयातिमृतोमोक्षमवाप्नुयात् ॥१०॥

ટીકાઃ--તે માણસ ગમેત્યાં ફરે તોપણ ભય ઉત્પન્ન થતો નથી તથા અકાળ મૃત્યુ પણ થતું નથી. મુવા પછી મોક્ષ પામેછે. ॥ ૧૦ ॥

ज्ञात्वाप्रारभ्यकुर्वीतह्यकुर्वाणोविनश्यति ॥
ततोज्ञात्वैवसंपन्नमिदंप्रारभ्यतेबुधैः ॥११॥

ટીકાઃ--આ કીલકનો સમજીનેજ શરૂવાતથી પાઠ કરવો. અને તેમ ન કરવાથી તેનો નાશ થાયછે માટે સમજીનેજ ડાહ્યા માણસોએ પાઠ કરવો. ૧૧

सौभाग्यादिचयात्किंचितदृश्यतेललनाजने ॥
तत्सर्वंतत्प्रसादेनतेनजाप्यमिदंशुभम् ॥१२॥

ટીકાઃ—સૌભાગ્ય વિગેરે જે કાંઈ સ્ત્રી જાતીમાં દેખાયછે તે સઘળું દેવીની કૃપાથી પ્રાપ્ત થાયછે. માટે આ કીલકનો પાઠ કરવો. ॥ ૧૨ ॥

शनैस्तुजप्यमानेस्मिंस्तोत्रेसंपत्तिरुच्चकैः ॥
भवत्येवसमग्रापिततः प्रारभ्यमेवतत् ॥१३॥

ટીકાઃ—આ સ્તોત્રનો જે મંદસ્વરથી પાઠ કરે તો સંપત્તિ મળે, ને ઊંચે સ્વરથી પાઠ કરે તો તેને બહુ જાતની ઊંચી સંપત્તિનો લાભ થાય છે. વાસ્તે આ સ્તોત્રનો ઊંચેજ સ્વરથી પાઠ કરવો. ॥ ૧૩ ॥

ऐश्वर्यंयत्प्रसादेनसौभाग्यारोग्यसंपदः ॥
शत्रुहानिः परोमोक्षः सानकिंस्तूयतेजनैः ॥१४॥

ટીકાઃ—જે દેવીની કૃપાથી, ઈશ્વરતા, સૌભાગ્ય, તનદુરસ્તી, સંપત્તિ, દુશ્મનોનો નાશ, અને મોક્ષ ( કૈવલ્ય મોક્ષ ) થાયછે. તે દેવીની લોકોએ શા માટે સ્તુતી ન કરવી. ॥ ૧૪ ॥

॥ इतिईश्वरविरचितंदेव्याःकीलकंसमाप्तम् ॥

ઈશ્વરનું રચેલું દેવીનું કીલક સમાપ્ત.

---

॥ श्रीचंडिकादेव्यैनमः ॥

अस्यश्रीनवार्णवमंत्रस्य ॥ ब्रह्माविष्णुमहेश्वराऋषयः ॥ गायत्र्युष्णिगनुष्टुप्छंदांसि ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वत्योदेवताः ॥ ऐंबीजम् ॥ ह्रींशक्तिः ॥ क्लींकीलकम् ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीप्रीत्यर्थेजपेविनियोगः ॥ ब्रह्माविष्णुमहेश्वरऋषिभ्योनमःशिरसि ॥

गायत्र्युष्णिगनुष्टुप्छंदोभ्योनमःमुखे ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवताभ्योनमः हृदये ॥ ऐंबीजाय नमःगुल्ये ॥ ह्रींशक्तयेनमःपादयोःक्लींकीलकायनमःनाभौमूलेनकरौसंशोध्य ॥ ऐंअंगुष्ठाभ्यांनमः ह्रींतर्जनीभ्यां नमःक्लींमध्यमाभ्यांनमः ॥चामुंडायैअनामिकाभ्यांनमः॥ विच्चेकनिष्ठिकाभ्यांनमः ॥ ऐंह्रींक्लींचामुंडायैविच्चेकरतलकरपृष्ठाभ्यांनमः ॥ एवंह्रदयादि ॥ ऐंनमः॥शिखायाम्॥ ह्रींनमःदक्षिणनेत्रे॥क्लींनमःवामनेत्रे॥चांनमःदक्षिणकर्णे॥ मुंनमःवामकर्णे ॥ डांनमःदक्षिणनासापुटे॥यैंनमःवामनासापुटे॥विंनमःमुखे॥च्चेंनमःगुह्ये॥ मूलेनाष्टवारंव्यापकंकुर्यात्॥ऐंप्राच्यैनमः॥ ह्रींआग्नेय्यैनमः॥क्लींदक्षिणायैनमः ॥चांनैर्ऋत्यैनमः॥मुंप्रतिच्यैनमः॥डांवायव्यैनमः॥यैंउदीच्यैनमः ॥ विचेईशान्यैनमः ॥ ऐंह्रींक्लींचामुंडायैविच्चेऊर्ध्वायैनमः॥ ऐंह्रींक्लींचामुंडायैविच्चेभूम्यैनमः ॥ ॥ अथ ध्यानम्॥ खड्गंचक्रगदेषुचापपरिघान्शूलंभुशंडींशिरःशंखंसंदधतींकरैस्त्रिनयनांसर्वांगभूषावृताम् ॥ नीलाश्मद्युतिमास्यपाददशकांसेवेमहाकालिकांयामस्तौत्स्वपितेहरौकमलजोहतुंमधुंकैटभम्.

ટીકાઃ--ખડ્ગ, ચક્ર, ગદા, બાણ, ધનુષ, ભોગળ, ત્રિશૂળ, ભુશંડી, માથું, શંખ, એટલી વસ્તુઓ પોતાના હાથથી ધારણ કરતી, ત્રણ આંખવાળી, સર્વ અંગમાં ઘરેણાં ધારણ કરેલાંછે એવી, કાલામણીનાજેવી કાંતીવાળી, દશ મોહોડાં તથા દશ પગવાળી, નારાયણ સુતા હતા ત્યારે મધુકૈટભને મારવા સારૂ બ્રહ્માએ જેની સ્તુતિ કરી હતી એવી જે માહાકાળી તેને હું સેવુંછું. ॥ १ ॥

अक्षस्रक्परशुंगदेषुकुलिशंपद्मंधनुःकुंडिकांदंडंशक्तिमसिं चचर्मजलजंघंटांसुराभाजनम् ॥ शूलंपाशसुदर्शनेचदधतींहस्तैः प्रवालप्रभांसेवेसैरिभमर्दिनीमिहमहालक्ष्मींसरोजस्थिताम् ॥२॥

ટીકાઃ—અક્ષમાલા, ફરશી, ગદા, બાણ, વજ્ર, પદ્મ, ધનુષ, કુંડી, લાકડી, સાંગ, તરવાર, ઢાલ, શંખ, ઘંટા, મધુપાત્ર, ત્રીશૂળ, પાસ, શુદર્શન, [ચક્રનું નામછે ] એ આયુધોને પોતાના હાથથી ધારણ કરતી, પરવાળાના જેવી લાલ કાંતીવાળી, મહીષાસુરનો નાશ કરનારી, કમળ ઉપર બેઠેલી જે મહાલક્ષ્મી તેની હું સેવા કરૂંછું. ॥ ૨ ॥

घंटाशूलहलानिशंखमुसलेचक्रंधनुःसायकंहस्ताब्जैर्दधतींघनांतविलसच्छीतांशुतुल्यप्रभाम् ॥ गौरीदेहसमुद्भवांत्रिजगतामाधारभूतांमहापूर्वामत्रसरस्वतीमनुभजेशुंभादिदैत्यार्दिनीम् ॥३॥

ટીકાઃ—ઘંટા, ત્રીશૂળ, હળ, શંખ, સાંબેલું, ચક્ર, ધનુષ, બાણ એઓને પોતાના કમળજેવા હાથે ધારણ કરનાર, શરદના ચંદ્રના જેવી કાંતિવાળી, ગૌરીના (પાર્વતીના) દેહથી ઉત્પન્ન થયેલી, ત્રીલોકીને આશરો આપનાર, ને શુંભ વગેરે દૈત્યોનો નાશ કરનારી જેની પેહેલાં "મહા" એવું પદછે એવી સરસ્વતી એટલે કે મહાસરસ્વતિ તેને હું ભજુંછું. ॥ ૩ ॥

एवंध्यात्वामानसोपचारैःसंपूज्यमालांप्रार्थयेत् ॥ महामालेमहामायेसर्वशक्तिस्वरूपिणि॥ चतुर्वर्गस्त्वयिन्यस्तस्तस्मान्मेसिद्धिदाभव ॥

अविघ्नंकुरुमालेत्वंजपंकुर्यात् ॥ जपांतेमालांशिरसिनिधायप्रार्थ्येत्हृदयादिषडंगन्यासंकुर्यात् ॥ रात्रिसूक्तंपठित्वासप्तशतीन्यासान्कुर्यात् ॥ एतेषांश्रीप्रथममध्यमोत्तम

चरित्राणांब्रह्मविष्णुमहेश्वराऋषयः ॥ श्रीमहाकालीम
हालक्ष्मीमहासरस्वत्योदेवताः ॥ गायत्र्युष्णिगनुष्टुपछं
दांसि ॥ नंदाशाकंभरीभीमाःशक्तयः ॥ रक्तदंतिकादुर्गा
भ्रामर्योबीजानि ॥ अग्निर्वायुःसूर्यस्तत्वानि ॥ ऋग्यजुःसा
मवेदाध्यानानि ॥ सकलकामनासिद्धयेश्रीदेवतात्रयप्री
त्यर्थेचरित्रत्रयजपेविनियोगः ॥ खड्गिनीशूलिनीघोराग
दिनीचक्रिणीतथा ॥ शंखिनीचापिनीबाणभुशुंडीपरिघा
युधा ॥ अंगुष्ठाभ्यांनमः ॥ शूलेनपाहिनोदेविपाहिखड्गेन
चांबिके ॥ घंटास्वनेननःपाहिचापज्यानिस्वनेनच ॥ तर्ज
नीभ्यां० ॥ प्राच्यांरक्षप्रतीच्यांचचंडिकेरक्षदक्षिणे ॥ भ्रा
मणेनात्मशूलस्यउत्तरस्यांतथेश्वरी ॥ मध्यमाभ्यां० ॥
सौम्यानियानिरूपाणित्रैलोक्येविचरंतिते ॥ यानिचात्यं
तघोराणितैरक्षास्मांस्तथाभुवम् ॥ अनामिकाभ्यांनमः ॥
खड्गशूलगदादीनियानिचास्त्राणितेंऽबिके॥ करपल्लवसंगी
नितैरस्मान्रक्षसर्वतः ॥ कनिष्ठिकाभ्यां० ॥ सर्वस्वरूपे
सर्वेशेसर्वशक्तिसमन्विते ॥ भयेभ्यस्त्राहिनोदेविदुर्गेदेवि
नमोस्तुते ॥ करतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादिन्या
सः ॥ ॥ अथध्यानम् ॥ ॥ विद्युद्दामसमप्रभांमृगपतिस्कं
धस्थितांभीषणांकन्याभिःकरवालखेटविलसद्धस्ताभिरा
सेवितामहस्तैश्चक्रधरालिखेटविशिखांश्चापंगुणं तर्जनीं-
विभ्राणामनिलात्मिकांशशिधरांदुर्गांत्रिनेत्रांभजे ॥१॥

ટીકાઃ—વીજળીનાજેવી કાંતીવાળી, સીંહની કાંધ ઉપર બેઠેલી, ભયંકર હાલ તરવારથી જેના હાથ શોભીરહ્યાછે, એવી કન્યાઓથી સેવાયેલી, ચક્ર, ધરા, અલી, ઢાલ, સાંકળ, બાણ, દોરી, તર્જની, [મુદ્રાછે] એઓને હાથમાં ધારણ કરનારી પવન જેનું સ્વરૂપછે, ચંદ્રને ધારણ કરનાર એવી જે ત્રણ નેત્રવાળી દુર્ગા તેને હું ભજુંછું. ॥ ૧ ॥

## ॥ श्रीगणपतिर्जयति ॥

प्रथमचरित्रस्यब्रह्माऋषिः ॥ महाकालीदेवता ॥ गायत्रीछंदः ॥ ॥ नंदाशक्तिः ॥ रक्तदंतिकाबीजम् ॥ ॥ अग्निस्तत्वं ॥ ऋग्वेदःस्वरूपम् ॥ श्रीमहाकालीप्रीत्यर्थंप्रथमचरित्रजपेविनियोगः ॥ ॥ खड्गंचक्रगदेषुचापपरिघान्शूलंभुशुण्डींशिर ः शंखंसंदधतींकरैस्त्रिनयनांसर्वाङ्गभूषावृतां ॥ नीलाश्मद्युति मास्यपाददशकांसेवे महाकालिकां यामस्तौत्स्वपितेहरौकमलजोहंतुंमधुंकैटभं ॥ ॥ मार्कण्डेयउवाच ॥ ॥

सावर्णिस्सूर्य्यतनयोयोमनुःकथ्यतेष्टमः ॥
निशामयतदुत्पत्तिंविस्तराद्गदतोमम ॥ १ ॥

નમશ્ચંડિકાયૈ ॥ પ્રથમ દેવીના કવચનો પાઠ કરીને, પછી અર્ગલા તથા કીલકનો જપ કરવો. પછી સપ્તશતીનો પાઠ કરવો. એવો વેદોક્ત ક્રમ છે. આ સપ્તશતીની, તેના અર્થના જ્ઞાનદ્વારાએ, સર્વની વિશેષ ભક્તિ થવામાટે, માંહેનો અર્થ પ્રાકૃત ભાષામાં કર્યોછે. તે એમ કે,—મારકંડેય કહેછે. હે રાજન, સૂર્યની પત્ની સવર્ણા નામે જે છાયા હતી, તેણીને સૂર્યથકી જે પુત્ર થયો, તેનું સાવર્ણી નામ છે. તેજ ભવિષ્યકાલમાં આઠમો મનુ થનાર છે. તેની ઉત્પત્તિ હું તને વિસ્તારથી કહુંછું તે સાંભળ. ॥ ૧ ॥

महामायानुभावेनयथामन्वंतराधिपः ॥
सबभूवमहाभागस्सावर्णिस्तनयोरवेः ॥ २ ॥

ટીકાઃ--એ સૂર્યપુત્ર સાવર્ણી, સંપૂર્ણ ઐશ્વર્ય, ધર્મ, યશ, સંપત્તિ, જ્ઞાન તથા વૈરાગ્ય એમ ષડવિધ ભાગ્યસંપન્ન છતાં તેણે દેવીની ઉત્કૃષ્ટ ઉપાસના કરીને, દેવીને પ્રસન્ન કર્યાં. તે વખત એ માહામાયા કે જે ઇશ્વરની શક્તિ, તેમણે અને આ મન્વંતર પ્રાપ્ત થાય એવી ઇચ્છા કરતાંજ, તેમના પ્રભાવથી ઇકોતેર મહાયુગકરતાં કંઇક અધિક કાલપર્યંત તેને મન્વંતરોનું જે અધિપત્ય પ્રાપ્ત થયું તે પણ હું કહું છું. સાંભળ. ॥ ૨ ॥

स्वारोचिषेंतरेपूर्वेचैत्रवंशसमुद्भवः ॥
सुरथोनामराजाभूत्समस्तोक्षितिमंडले ॥ ३ ॥

ટીકાઃ--તે એમકે, પૂર્વે સ્વારોચિષ નામે બીજા મન્વંતરમાં, એ સ્વારોચિષનો ચૈત્ર નામે પુત્ર હતો. તેના વંશમાં સુરથ નામે રાજા થયો. તે સમસ્ત ભૂમંડલનું પાલન કરતો હવો. ॥ ૩ ॥

तस्यपालयतःसम्यक्प्रजाःपुत्रानिवौरसान् ॥
बभूवुःशत्रवोभूपाःकोलाविध्वंसिनस्तदा ॥ ४ ॥

ટીકાઃ–તે એમકે, જેમ ઔરસ પુત્રનું (પરણેત સ્ત્રીના પુત્રનું) પાલન કરીએ, તેમ તે સમાન રાજનીતિ તથા શાસ્ત્રોક્ત પ્રકારે પ્રજાનું પાલન કરતો હતો. તેમ છતાં, તેના રાજમાં કોલા નામની એક રાજધાની હતી, ત્યાંના રાજા શત્રુનો વિધ્વંશ કરનારા હોવાથી, તેઓને કોલા વિધ્વંસિ એવું નામ પ્રાપ્ત થયું. તેજ એ સુરથસાથે શત્રુત્વ કરવા લાગ્યા. ॥ ૪ ॥

तस्यतैरभवद्युद्धमतिप्रबलदंडिनः ॥
न्यूनैरपिसतैर्युद्धेकोलाविध्वंसिभिर्जितः ॥ ५ ॥

ટીકાઃ–એમ છતાં એક સમય, એ સુરથ રાજા શત્રુને દંડ દેવાને સમર્થ હતો, અને કોલા વિધ્વંસિ, એ શુરથનો પરાજય કરવાને દુર્બળ છતાં, તેણે યુદ્ધ કરીને એ સુરથ રાજાને જીત્યો. ॥ ૫ ॥

ततःस्वपुरमायातोनिजदेशाधिपोभवत् ॥
आक्रांतस्समहाभागस्तैस्तदाप्रबलारिभिः ॥ ६ ॥

ટીકાઃ—એરીતે એ પ્રબલ શત્રુએ, એ સુરથ મહા ભાગ્યશાલી છતાં, તેને અત્યંત પરાજીત કર્યો. તે વખત તે નિરૂત્સાહિપણે સ્વદેશ આવીને, માત્ર પોતાની રાજધાનીને લગતા પ્રાંતનુંજ અધિપત્ય કરવા લાગ્યો; તેથી તેનું સાર્વભૌમત્વ નહિં સરિખું થયું. ॥ ૬ ॥

अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्यदुरात्मभिः ॥
कोशोबलंचापहृतंतत्रापिस्वपुरेततः ॥ ७ ॥

ટીકાઃ—એરીતે રિપુવડે પરાભવ પામવાથી દુર્બલ થએલો એ સુરથ રાજા પોતિકા નગરમાં નિવાસ કરતો હતો તેમ છતાં, તેના જામદારખાનામાના સઘળા દ્રવ્ય તથા સૈન્યવગેરેનું, એ દુરાત્મ પ્રબલ પ્રધાને હરણ કર્યું. ॥ ૭ ॥

ततोमृगयाव्याजेनहृतस्वाम्यस्सभूपतिः ॥
एकाकीहयमारुह्यजगाम गहनंवनं ॥ ८ ॥

ટીકાઃ—એ રીતે એ શત્રુઓએ, તેના દેશાધિપત્યપણા વગેરે સર્વનું હરણ કર્યા પછી, એ રાજા મૃગયા કરવાના નિમિત્તથી, અશ્વપર બેસીને, એકલોજ ઘોર અરણ્યમાં ગયો. ॥ ૮ ॥

सतत्राश्रममद्राक्षीद्विजवर्यस्यमेधसः ॥
प्रशांतश्वापदाकीर्णमुनिशिष्योपशोभितं ॥ ९ ॥

ટીકાઃ—તો ત્યાં તેણે મેધા નામના શ્રેષ્ટ ઋષિનું આશ્રમ દીઠું. તે એવું કે ત્યાં નિવાસ કરનારાં શાન્ત પશ્વાદિક તથા મુનિ શિષ્ય ગણોથી અત્યંત શોભાયમાન હતું. ॥ ૯ ॥

तस्थौकंचित्सकालंचमुनिनातेनसत्कृतः ॥
इतश्चेतश्चविचरंस्तस्मिन्मुनिवराश्रमे ॥ १० ॥

ટીકાઃ—એ રીતના એ આશ્રમમાં, એ સુરથ રાજાએ પ્રવેશ કરતાંજ, એ મુનિએ તેનો અતિ સત્કાર કર્યો. પછી કેટલાક કાલસુધી તે ત્યાં નિવાસિત થવા છતાં, એ મુનીંદ્રાના આશ્રમમંડલમાં આમથી તેમ સંચાર કરતો હતો. ॥ ૧૦ ॥

सोचिंतयत्तदातत्रममत्वाकृष्टचेतनः ॥
मत्पूर्वैःपालितंपूर्वमयाहीनंपुरंहितत् ॥ ११ ॥

ટીકાઃ-પરંતુ તે ત્યાં છતાં એવું ચિંતન કરતો હવો કે, મારૂં રાજ્ય તથા ઐશ્વર્યાદિક કેવાં નષ્ટ થયાં! તે વિષેના મમત્વના અભિમાનથી તેની બુદ્ધિ નિવૃત્તિમાર્ગથકી ભ્રષ્ટ થઈ; તેથી તે વારંવાર એવી ચિંતા કરવા લાગ્યો કે, જે નગર મારા પુર્વજોએ પ્રથમ પાલીપોશીને સુખી કર્યું હતું; તેનું હાલમાં મારા શત્રુઓ તથા સેવકો, મારા વિના પ્રથમ પ્રમાણે ધર્મથી પાલન કરતા હશે કે નહીં! ॥ ११ ॥

मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतःपाल्यतेनवा ॥
नजानेसप्रधानोमेशूरहस्तीसदामदः ॥ १२ ॥

ટીકાઃ-કારણ કે, તેઓની વૃત્તિઓ વિપરીત થઈ છે; તેમજ મારો સદાકાલ મદોન્મત રેહેનારો જે શુર હસ્તિ, તેની પણ સ્થિતી કેવી હશે? વળી મારો પ્રધાન અને હાથીનો માવત, ॥ १२ ॥

ममवैरिवशंयातःकान्भोगानुपलप्स्यते ॥
येममानुगतानित्यंप्रसादधनभोजनैः ॥ १३ ॥

ટીકાઃ-મારા શત્રુને સ્વાધીન થઈને, શી રીતનાં સુખ દુઃખાદિક ભોગવતા હશે? તેમજ હું સર્વ ઉપર સર્વદા પ્રસન્નછતાં, જેઓને દરેક મહિને પગાર તથા દરરોજ અન્નપાનાદિક ભોજન આપતો હતો તે મારા સેવકો, ॥ १३ ॥

अनुवृत्तिंध्रुवंतेद्यकुर्वंत्यन्यमहीभृताम् ॥
असम्यग्व्ययशीलैस्तैःकुर्वद्भिःसततंव्ययं ॥ १४ ॥

ટીકાઃ-હવે નીસ્ચેકરીને એ બીજા રાજાની તાબેદારી ઉઠાવા લાગ્યા હશે! વળી શાસ્ત્રમાં કહયું છે તે પ્રમાણે રાજાએ ઊત્પન્ન થએલા દ્રવ્યનો એક ચતુર્થાંશ ખરચ કરવો; તે પ્રમાણે નહીં કરતાં, એ રાજા અવ્યવસ્થિત ખરચ કરનારો હોવાથી, મારા સકળ દ્રવ્યને ખરચી નાંખશે; તો મને ધિક્કાર હજો. ॥ १४ ॥

संचित:सोतिदु:खेनक्षयंकोशोगमिष्यति ॥
एतच्चान्यच्चसततंचिंतयामासपार्थिव: ॥ १५ ॥

ટીકાઃ—કારણ કે, મેં અત્યંત દુઃખથી જે દ્રવ્યનો સંગ્રહ કર્યો હતો, તે ખજાનામાના મારા મુલ દ્રવ્યનો નિરંતર ક્ષય થશે ? એ વગેરે અનેક પ્રકારના ઉઠતા સંશયો બાબત એ સુરથ રાજા ચિંતા કરવા લાગ્યો.॥૧૫॥

तत्रविप्राश्रमाभ्याशेवैश्यमेकन्ददर्शस: ॥
सपृष्टस्तेनकस्त्वंभोहेतुश्चागमनेऽत्रक: ॥ १६ ॥

ટીકાઃ—તો એટલામાં એ મુનિના આશ્રમપાસે એ સુરથ રાજાએ કોઇએક વૈશ્યને દેખ્યો, તે વખત તેને પુછયું કે, અરે તું કોણ છે ? તથા તારે અહીં આવવાનું કારણ શું ? ॥ ૧૬ ॥

सशोकइवकस्मात्त्वंदुर्मनाइवलक्ष्यसे ॥
इत्याकर्ण्यवचस्तस्यभूपते:प्रणयोदितं ॥ १७ ॥

ટીકાઃ—અને તું શોકાતુર સમાન દેખાવાછતાં, તારૂં મનપણ અત્યંત ખિન્ન થયા જેવું ભાસે છે તેનો હેતુ શું છે ? તે કહે. એ રીતનાં એ રાજાનાં પ્રેમયુકત વાક્યો સાંભળીને. ॥ ૧૭ ॥

प्रत्युवाचसतंवैश्य:प्रश्रयावनतोनृपं ॥
वैश्यउ०समाधिर्नामवैश्योहमुत्पन्नोधनिनांकुले ॥१८॥

ટીકાઃ—એ વૈશ્ય [ વાણિયો ] વિનયથી નમ્ર હોતોથકો, એ સુરથ રાજાને પ્રત્યુતર આપવા લાગ્યો કે, હું સમાધિ નામના ધનવાન વૈશ્યના કુળમાં ઉત્પન્ન થયો છું. ॥ ૧૮ ॥

पुत्रदारैर्निरस्तश्चधनलोभादसाधुभि: ॥
विहीनश्चधनैर्दारै:पुत्रैरादायमेधनम ॥१९॥

ટીકાઃ—હવે અહીં આવવાનું કારણ એ છે કે, મારાં સ્ત્રીપુત્ર અતિ દુષ્ટ હોવાને લીધે, તેઓએ દ્રવ્યના લોભને માટે મારો ધિક્કાર કર્યો; અને એ સ્ત્રી, પુત્ર તથા સ્વજનોએ મારૂં સર્વસ્વ ધન હરણ કરીને તે માંહેનો

કિંચિત માત્ર પણ ભાગ ન આપતાં, મને નિરંતર નિર્ધન કર્યો. ॥ ૧૯ ॥

वनमभ्यार्गातोदुःखीनिरस्तश्चाप्तबंधुभिः ॥
सोहंनवेद्मिपुत्राणांकुशलाकुशलात्मिकाम् ॥२०॥

ટીકાઃ—એ કારણથી હું સર્વથા ધનહિન થવાને લીધે, મારાં પ્રીય જનો તથા ભાઈઓએપણ મારો ત્યાગ કર્યો; માટે પરમ દુઃખનેલીધે હું આ વનમાં આવ્યો; તો હવે આ સ્થલે રેહેવાથી સ્ત્રી, પુત્ર તથા સ્વજનોની કુશળતા અથવા અકુશળતાપણ હું જાણતો નથી. ॥ ૨૦ ॥

प्रवृत्तिंस्वजनानांचदाराणांचात्रसंस्थितः ॥
किंनुतेषांगृहेक्षेममक्षेमंकिंनुसांप्रतम् ॥२१॥

ટીકાઃ--તો, કહેવા મતલબ એટલીજ કે, હાલમાં તેઓ પોતપોતાને ઠેકાણે છતાં, તેઓની સ્ત્રીઓ તથા પુત્રોતરફની વર્તણુક ક્ષેમરૂપ છે કે વિપરીત છે? તેમજ મારા પુત્રાદિક શી રીતે વર્તે છે, તથા તેમનો સદવ્યાપારછે કે દુર્વ્યાપાર છે? વગેરે તરફની હું કેટલી ચિંત્તા કરૂં? ॥ ૨૧ ॥

कथंतेकिंनुसद्वृत्तादुर्वृत्ताःकिंनुमेसुताः ॥
॥ राजोवाच ॥ यैर्निरस्तोभवाँल्लुब्धैःपुत्रदारादिभिर्धनैः ॥
तेषुकिंभवतःस्नेहमनुबध्नातिमानसं ॥२२॥

ટીકાઃ—સુરથ રાજાએ પ્રશ્ન પુછયો કે, હે વૈશ્ય, જે સ્ત્રીપુત્રાદિકે દ્રવ્યલોભથી તારો ત્યાગ કર્યો, તેઓ તરફ તારૂં અંતઃકરણ શા માટે ખેંચાય છે.? ॥ ૨૨ ॥

॥ वैश्यउवाच ॥ एवमेतद्यथाप्राहभवानस्मद्गतंवचः ॥
किंकरोमिनबध्नातिममनिष्ठुरतांमनः ॥२३॥

ટીકાઃ--વૈશ્ય કહે છે. હે રાજન્, આપેં જે કહ્યું તે વાસ્તવિક છે; પરંતુ શું કરૂં? મારા મનમાં તેમની તરફ કાઠિણ્યતા પ્રાપ્ત થતી નથી. ॥ ૨૩ ॥

यैःसंत्यज्यपितृस्नेहंधनलुब्धैर्निराकृतः ॥

पतिस्वजनहार्दंचहार्दितेष्वेवमेमनः ॥२४॥

ટીકાઃ—જુઓ કે, સાક્ષાત્ મારા પુત્ર છતાં, તેઓએપણ ધનથી લુબ્ધ થઇને, મજપરના પિતુસ્નેહનો ત્યાગ કરીને, મારો તિરસ્કાર કર્યો. તેમજ સ્ત્રીઓએ પતિરૂપ સ્નેહનો તથા સ્વજનોએપણ આત્મરૂપ સ્નેહનો ત્યાગ કર્યો. એ રીતે એ સર્વે મજતરફ કઠિણ થયા; પરંતુ મારૂં મન માત્ર તેઓ તરફ સ્નેહયુકત હોય તેમ છે. ॥ ૨૪ ॥

किमेतन्नाभिजानामिजानन्नपिमहामते ॥
यत्प्रेमप्रवणंचित्तंविगुणेष्वपिबंधुषु ॥२५॥

ટીકાઃ—હે મહામતિ રાજન્, કદાપિ એ સ્ત્રીપુત્રાદિક વગેરેનાં અંતઃકરણ, મજ વિષે વિરૂદ્ધ છે તે હું જાણું છું; તથાપિ તેમની તરફ મારૂં ચિત્ત શા કારણથી પ્રેમબદ્ધ થાય છે? તે મને સમજાતું નથી. ॥ ૨૫ ॥

तेषांकृतेमेनिःश्वासोदौर्मनस्यंचजायते ॥
करोमिकिंयन्नमनस्तेष्वप्रीतिषुनिष्ठुरं ॥२६॥

ટીકાઃ—તેમજ તેમને માટે હું વારંવાર નિસાસા નાંખીને, અત્યંત ખિન્ન થાઊં છું; પરંતુ તેઓ મજ વિષે જેમ પ્રીતીરહિત થયાં છે, તેમ મારૂં મન તેમના તરફ થતું નથી. હું શું કરૂં? ॥ ૨૬ ॥

॥ मार्कंडेयउवाच ॥

ततस्तौसहितौविप्रतंमुनिंसमुपस्थितौ ॥
समाधिर्नामवैश्योसौसचपार्थिवसत्तमः ॥२७॥

ટીકાઃ—માર્કંડેય કહે છે કે, હે વીપ્ર, એ રીતે સમાધિ નામના વૈશ્ય તથા સુરથ નામના રાજા વચ્ચે સંવાદ થયાપછી, તે બેઊ મળીને એ મેધા નામના ઋષિની સમિપ જઇને ઉભા રહ્યા. ॥ ૨૭ ॥

कृत्वातुतौयथान्यायंयथार्हंतेनसंविदं ॥
उपविष्टौकथाःकाश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥२८॥

ટીકાઃ—અને એ રાજા તથા વૈશ્યે, ઋષિની આગળ શાસ્ત્રમર્યાદા પ્રમાણે યથાયોગ્ય ભાષણ કરીને, તેમની પાસે બેસીને, પોતાને તથા પોતાના જેવાજ દુઃખવાળા જોડિયાને લગતી દુઃખંદાયક હકિકતોનાં વર્ણન કર્યાં. ॥ ૨૮ ॥

॥ राजोवाच ॥ भगवंस्त्वामहंप्रष्टुमिच्छाम्येकंवदस्वतत् ॥
दुःखाययन्मेमनसःस्वचित्तायत्ततांविना ॥२९॥

ટીકાઃ—પછી એ સુરથ રાજા ઋષિને કહેવા લાગ્યો કે, હે મુનિભગવાન, હું આપને એક પ્રશ્ન પુછવાને ઇચ્છું છું, તેનો આપે કૃપા કરીને મને ઉત્તર આપવો જોઇએ. તે પ્રશ્ન એવો કે, મારા સંકલ્પાત્મક મનના નિશ્ચયાત્મક ચિતતરફનું રોકાણ કર્યા વિના, મને દુઃખ ઉત્પન્ન થવાનું કારણ શું ? આ પ્રશ્નનો ટુંકામાં અર્થાત એવો છે કે, બુદ્ધિથી નિશ્ચય ન કર્યા છતાં, માત્ર મનનાજ સંકલ્પથી દુઃખ શાથી થાય છે? તેનો નિર્ણય કરવાને મને અધિકાર નથી; માટે આપજ નિર્ણય કરીને સમજાવો. ॥ ૨૯ ॥

ममत्वंगतराज्यस्यराज्यागेष्वखिलेष्वपि ॥
जानतोपियथाज्ञस्यकिमेतन्मुनिसत्तम ॥३०॥

ટીકાઃ—ત્યારે એ દુઃખ કયું ? એમ પુછશો તો, દર્શાવું છું કે, હે શ્રેષ્ટ મુનિ, મારૂં રાજ્ય નષ્ટ થયું, તથા સ્વામિત્વ, પ્રધાન, સગાં, ધનનો ભંડાર, દેશ, કોટકિલ્લા તથા સૈન્ય એવાં સાત રાજ્યાંગ અને પુરવાસી જનોનો સમુદાય વગેરે, મારા અસાનિધ્યથી નહિં સરીખાં થયાં; એમ મારા જાણવા છતાં, અજ્ઞાનીની પેઠે, મારો તેમના પરનો મમત્વ જરાપણ મટતો નથી તેનું કારણ શું ? ॥ ૩૦ ॥

अयंचनिकृतःपुत्रैर्दारैर्भृत्यैस्तथोज्झितः ॥
स्वजनेनचसंत्यक्तस्तेषुहार्दीतथाप्यति ॥३१॥

ટીકાઃ—એવો મમત્વ માત્ર મનેજ છે એમ નથી, પરંતુ આ વૈશ્ય પણ મારી પેઠેજ દુઃખી છે. તે એમ કે, એના પુત્ર, સ્ત્રિયો, સેવકો, તથા સ્વજનોએ કદાપિ એનો તિરસ્કારપુર્વક ત્યાગ કર્યો, તથાપિ આ વૈશ્ય તેઓ

તરફ અત્યંત સ્નેહયુક્ત છે. ॥ ૩૧ ॥

एवमेषतथाहंचद्वावप्यत्यंतदुःखितौ ॥
दृष्टदोषेपिविषयेममत्वाकृष्टमानसौ ॥३२॥

ટીકાઃ– એવી સ્થિતિનો આ વૈશ્ય છે; તેમજ હું પણ તેવોજ છું. એ રીતના અમે બન્ને રાજ્ય તથા પુત્રાદિ વિષયોતરફ અમારાં પોતાનાં, એમ માનવામાં અમારા લોભનો દોષ છે એમ નિશ્ચે જાણવા છતાં, મમત્વથી અમારૂં અંતઃકરણ એ વિષયોએ આકર્ષણ કર્યાને લીધે, અમે બેઉ અત્યંત દુઃખી છીએ. ॥ ૩૨ ॥

तत्किमेतन्महाभागयन्मोहोज्ञानिनोरपि ॥
ममास्यचभवत्येषाविवेकांधस्यमूढता ॥३३॥

ટીકાઃ– તો હે મહા ભાગ્યશાલિ રૂષિ, એ રીતના વિષયોતરફ અમારા-પણાનો દોષ જાણનારા અમો જ્ઞાની પુરૂષોનેપણ, એવો મોહ શાથી થાય છે? કારણકે, એવું મુઢપણું વિવેક રહિત પુરૂશોમાં હોય છે, તેમને તથા આ વૈશ્યને શાથી પ્રાપ્ત થયું? ॥ ૩૩ ॥

॥ऋषिरुवाच॥ ज्ञानमस्तिसमस्तस्यजंतोर्विषयगोचरे ॥
विषयाश्चमहाभागयांतिचैवंपृथक्पृथक् ॥ ३४ ॥

ટીકાઃ–રૂષી તેનો ઉત્તર આપેછે કે, હે મહા ભાગ્ય સંપન્ન રાજા વિષયી પુરૂષોને બંધન કરનારો જે વિષય, તેનું સર્વ સાધારણ પ્રાણી માત્રને જ્ઞાન હોય છે; પરંતુ તેઓ તરફ નિરંતર મોહનો અભાવ હોય છે એમ નથી; પણ સર્વને મોહ છતાં, વિષય માત્ર આવતા શ્લોકમાં કહ્યા પ્રમાણે પૃથક પૃથક જ્ઞાનગોચર (જુદી જુદી સમજણ પ્રમાણે) હોય છે. ॥ ૩૪ ॥

दिवांधाःप्राणिनःकेचिद्रात्रावंधास्तथापरे ॥
केचिद्दिवातथारात्रौप्राणिनस्तुल्यदृष्टयः ॥३५॥

ટીકાઃ–તે એમ કે, ઘુવડાદિક જે પ્રાણી છે, તેઓને દિવસે અંધત્વ અને રાત્રે દેખવાપણું, કાગડા વગેરેને રાત્રે અંધત્વ અને દિવસે દેખવાપણું, તેમજ અળશિયાં વગેરે પ્રાણીઓને રાત્રી અને દિવસેપણ અંધત્વ હોય

છે, તો કોઈ દિવસાંધ તથા કોઈ રાત્રાંધ હોવા છતાં, સકળ પ્રાણીઓની પેઠે દેખવાપણું છે. એ ઉપરથી માત્ર સકળ સ્વાર્થક જ્ઞાનતરફ અંધત્વ નથી એમ નથી, અથવા અજ્ઞાનતરફ સદા કાલ મોહ હોય છે એમ પણ નથી; તો સર્વ વિષયોમાં સર્વને જ્ઞાન તથા અજ્ઞાન એ બન્ને હોય છે. ૩૫

ज्ञानिनोमनुजास्सत्यंकिंनुतेनहिकेवलम् ॥
यतोहिज्ञानिनस्सर्वेपशुपक्षिमृगादयः ॥३६॥

ટીકાઃ–કદાચિત માત્ર મનુષોનાજ જ્ઞાનને તું જ્ઞાન માનતો હોઇશ, તો કહું છું કે, મનુષ્યોને માત્ર જ્ઞાન હોય છે, બીજાંઓને નહીં, એવો તારો મત સત્ય છે; પરંતુ માણસોજ માત્ર જ્ઞાની છે એમ નથી; કારણ કે, તેઓનું જ્ઞાન અ-જ્ઞાનથી ઢંકાએલું છે. શી રીતે ? એમ પુછીશ, તો સાંભળ, જે જ્ઞાની છે તેઓએ, પોતિકા જ્ઞાનવડે જ્ઞાનીપણાનું અભિમાન કરવું અયુક્ત ઠરે; કા-રણ કે, જો એમ હોય, તો સર્વ સાધારણ પશુ, પક્ષી તથા મૃગાદિક સર્વ જ્ઞાની છે એમ ઠરશે. ॥ ૩૬ ॥

ज्ञानंचतन्मनुष्याणांयत्तेषांमृगपक्षिणां ॥
मनुष्याणांचयत्तेषांतुल्यमन्यत्तथोभयोः ॥३७॥

ટીકાઃ–હવે માણસ અને પશુના સરખાપણાના અર્થનો નિસ્ચે કરેછે. કે અહાર, ભય, મૈથુન તથા નિદ્રા રૂપી જે જ્ઞાન, તે તો મનુષ્ય અને બીજાં પ્રાણીઓમાં સમતુલ્ય છે તે સિદ્ધ થયું. ॥ ૩૭ ॥

ज्ञानेपिसतिपश्यैतान्पतङ्गञ्छावचंचुषु ॥
कणमोक्षाहृतान्मोहात्पीड्यमानानपिक्षुधा ॥३८॥

ટીકાઃ–વળી માણસો પોતાનું ઐશ્વર્યાદિક, પુત્રોને આપે છે તેમ બીજાં પ્રાણીઓ તથા પક્ષીઓ, પોતિકી ચાંચમાં આણેલી ચુન પોતિકાં બચ્ચાં ના મુખમાં સ્નેહને લીધે પોતે ભુખ્યાં રહિને આપે છે. ॥ ૩૮ ॥

मानुषामनुजव्याघ्रसाभिलाषाःसुतान्प्रति ॥
लोभात्प्रत्युपकारायनन्वेतान्किन्नपश्यसि ॥३९॥

